Scanned
30/9/2020
[illegible]

Sadashiva

Sadashiva bhatta (Grammer)
सदाशिव भट्टी (व्याकरण)
Sanskrit
Printed on paper
153 Folio available
1922 sambad (153 years old)
11.8" x 5"
Incomplete

१०.११- नं२२

श्रीकाशीजीमेमहल्लाघुघुरानासामाकीगल्लीआदिविश्वेश्वरकेपास श्रीयुतबाबूहरखचंद्जीकेबाडेमे
दुर्गाप्रसादकटारेकेगणेशयंत्रालयमेसदाशिवभट्टीछापीगई लिखामहेसपांडे छापनेवाला।
घुरविमजिसेलेनाहोयसोचांदनीचोकमेकुंजगलीकेपश्चिमफाटककेपासदुर्गाप्रसादके
दुकानमेमिलैगी सम्वत १९ २२ मी० माघशुक्ल १२ द्वादश्याम् शनिवासरे ॥ ॥

स·भ· श्रीगणेशायनमः ॐ प्राणनाथपदाम्भोजनखचन्द्रमरीचयः व्याकोचयन्तुसततंमममानसकैरवम्॥ कारकविभक्ते
१ र्बलवत्त्वाद्द्वितीयेति। कुक्कुटाण्डसमासवत्स्त्रीप्रत्ययोत्पत्तेः पूर्वं तद्धितः तत्तस्तुनस एकार्थीभावात्। शरदः कृतार्थेतिवत्सामान्येनपुंस
कं वा। एतेन तद्धितान्तत्वेन गुणवचनत्वाभावात्त्वतलोरित्यस्याप्राप्त्या पुंवत्त्वासङ्गतिरित्यपास्तम्। न च स्वस्त्यादिसाहचर्या
दित्यादिमाधवोक्तयुक्त्यापि निर्वाह इति वाच्यम्। रावणायनमस्कुर्यादिति भट्टिप्रयोगे द्वितीयाप्रसंगात्। न चासत्त्वार्थक
स्वरादिपठितस्य स प्रयोगः। नमस्पुरसोरिति सत्त्वानापत्तेः तत्र जयमंगलानुरोधेन सविसर्गपाठकल्पनेपि स्वयंभुवे नमस्कृ
त्येत्यादौ समासानापत्तिर्दुष्परिहरा। वस्तुतः कर्मत्वमिह न विवक्ष्यत इति जयमंगलाशयः। अनुकूल·यितुमित्यध्याहारप
रत्वं थासूपायान्तरपरा इति बोध्यम्। एतेन फलाभावात्साहचर्यमिह न व्यवस्थापकमित्यपास्तम्। देवानां नमस्करोतीत्यस्य
फलस्य सत्त्वादिति बोध्यम्। फलाभावादुपपदविभक्तेरित्येव न प्रवर्तत इत्यस्य वक्तुं शक्यत्वाच्च· केचित्तु साहचर्येणात्र नि रा·म·
यामकमन्यथा विनिगमनाविरहेण जन्तत्वेनाक्षरसमाम्नायिकान्तत्वेनैव सादृश्यग्रहे देवेभ्यो नमोत्रेत्यादावेव तत्रा १
पत्त्या देवेभ्यो नमः इत्यत्रानापत्त्या भाष्याद्याकरग्रन्थासंगतिरेव स्यात्। किंच· नमोवरिवइति सूत्रे भाष्ये नमस्यति देवा

नित्यत्र चतुर्थीमाशंक्योपपदविभक्तेरिति न्यायेन समाहितम्· साहचर्येण द्योतकनमश्शब्दे चतुर्थ्यं प्रवृत्तौ कारकः पूजा
र्थकत्वेन नमसो द्योतकत्वेन तदुभयमप्यसंगतमित्याहुः। तिरस्कृत्येत्यर्थ इति। फलितार्थप्रदर्शनमिदमिति पाठकाः
एवस्वतिरस्कारार्थस्य परिभवतेरेव विचारार्थकत्वमिति नासंगतिरिति भावः। इदमेव युक्तम्। केचित्तु वैयधिकरण्येना
न्वयेन तत्संबंधिधातोरित्यर्थः। तदर्थप्रकृतिकण्यन्तधातोरिति यावत्। यद्वा। कोशात्तिरस्कारार्थस्य परिभवतेर्धातोर्वि
चारार्थकत्वे विषयत्वापत्त्यर्थकत्वे· तदुत्तरणिचा तदनुकूलकृत्यभिधानाद्विषयत्वापादनरूपविचारार्थकत्वमुपारिभावय
तेरित्यर्थः। एतेन यस्य कोशात्तिरस्कारार्थकत्वं परिभवतेर्न तस्य विचारार्थकत्वम्· यस्य भावयतेस्तत्वं न तस्य कोशात्तत्त्वमि
त्युभयमसङ्गतमित्यपास्तम्। यत्तु परिभवतेस्तिरोभवनं ण्यन्तस्य तिरस्कारणमर्थ इति भूषाभाक्तिस्य चौरादिकस्येदं रूपमि
ति वा परिभाव्येत्यस्य तिरस्कृत्येति विवरणं सम्यगेवेति तन्न। घञन्तनामार्थानुशासकवक्ष्यमाणकोशसंचारस्यासंगति
प्रसंगात् ममतु परिभाव्येत्यादेरयमर्थः। कोशात्तिरस्कारार्थस्य परिभावशब्दस्य धातोः परिभाव्येत्यत्र णिलोपे धातुवत्
एतदुक्तिस्तनेकार्थत्वे साधकस्य धातुत्वरूपस्य संपत्तिसूचनायेत्यन्ये। वस्तुतस्तिरस्कारार्थस्य परिभावशब्दस्यावयवो या



स॰भ॰ २

धातुस्तस्येति वैयधिकरण्येन व्याख्येयम्। अन्यथा तु न संभवः। उपसर्गसमानाकारत्वेन परैः पृथक्कारात् विशिष्टस्य धातुत्वाभावात्। अ
न एव। धातोरनेकार्थकत्वादेव परिभवतेस्तिरस्कारातिरिक्तार्थकत्वादेव वा संगच्छते। तन्मात्रार्थकत्वे तु व्यावर्त्याभावेनावज्ञाने
इति विफलमेव स्यादिति न संगच्छत इति केचित्। तिरस्कारार्थस्य धातोर्विचारार्थत्वेपीति। इङ्स्त्वणिच् द्योतक इति पक्षाभिप्रा
येणेति पाठकाः। हेतुमतीति सूत्रस्थान्तरग्रन्थविरोधात् द्योतकत्वपक्षस्य कुत्सितपक्षमवष्टभ्य समर्थनं तु न रोचतेऽस्माकमि
ति मन्यते। भाविनोपीति। अत्र ग्रंथस्येति शेषः। इयमिति युक्तिः कौमुदीगतलिङ्गारोपात्। उपमायां लिङ्गभेदजदुष्टत्वनिरासायारो
पः यद्वा भाविनोप्यर्थस्यामन्त्रबुद्ध्या विषयीकरणस्य दृष्टत्वाद्भाविसूत्रविहितेरियमित्यनेन न परामर्शः। वृत्तिपरिच्छेदकत्वे
नेति। संज्ञाशब्दनिष्ठवृत्तिच्छेदकत्वेनेत्यर्थः। अतस्तस्यापवादं कर्तरि कृदित्यादीनां न संज्ञासूत्रत्वम्। अणादीनां जातित्वात्। ए
तेन न तत्र संज्ञासूत्रत्वातिव्याप्तिनिरासाय संज्ञास्वरूपावधिर्नेत्यादिक्लिश्यन्तो मिश्राः समाहिताः। अणुदित्यादि ग्रन्थापि श्च।
स्वौजसमौडित्यादीनामपीति। अस्य विध्यर्थत्वे बहूनि फलान्युक्तानि। अविवक्षयानन्तकार्यमिति। नन्वेकपदे इत्यस्यारा रामः
जीयतीत्यादिसिद्धये पदत्वाभाववदुत्तरखण्डकसमुदायत्वमिति परिष्करिष्यमाणत्वेन प्रकृते च न राज्ञान्तत्वेन तस्यानित्य २

स·भ· नुसंधानस्यावश्यकत्वेनप्रत्युततदेवगौरवम्।छंदसिसर्वविधीनांवैकल्पिकत्वेनाभावकल्पनेबाधाभावेनासंगतेरभाव
३ श्च।एतेनप्रतिसूत्रंप्रातिपदिकत्वस्यवक्ष्यमाणत्वेनतदर्थवत्त्वेलुकःसिद्ध्यासौत्वाद्रोविफलइत्यपिनिरस्तम्।जश्त्वाद्य
भावायसूत्रप्रकृतिकसुबनुत्पत्तयेतदादरस्यावश्यकत्वाच्च।किंचतुकिपूर्वभागस्यपदत्वेनियमेचप्रत्येकंसूत्रस्यप्राति
पदिकत्वानापत्त्याणादेरित्संज्ञानापत्तिरुपायांतरेणपरिहरणीयास्यात्।पत्तुप्रातिपदिकांतत्वसंपत्त्याणादेरित्संज्ञायेप्र
त्येकंसूत्रोपदेशोतान्यर्थस्यावश्यकत्वेनवर्णोपदेशेआचार्यतात्पर्यकस्यनेनमानो।एवंचधनादौधादिभ्यइत्वात्रापिन
नदुप्रतिः।तथैवचचकारप्रत्ययोपिनेतिसौत्रत्वबाहुलकत्वाश्रयणंविफलमितितन्नावर्णानामुपदेशःलकारोपदेशस्या
दिभाष्योक्तिस्वारस्यस्यतत्रमानत्वादितिसुधियोविभावयंतुइतिकेचित्।यत्त्विति।एवंचपुनःशक्तिग्रहाभावेपिसंध्युपजी
व्यानिश्चयेनाविकृतरूपाद्यकारादिषुगृहीताजादिपदशक्तिःसंधिकार्येकृतेःविकृतेष्वविकृतेषुचेतिसंदेहाद्धिरुध्येते
तिभाव इतिव्याचक्षते।केचित्तुउपजीव्यस्यसंधिकरणीभूताजादिपदशक्तिग्रहस्यविरोधादित्यर्थः।विरोधाभावादिति
अविकृतेषुशक्तिग्रहमुपजीव्यजातस्यविकृतेषुशक्तिग्राहकत्वसंभवादितिभावः।ननूपजीव्यस्याविकृतरूपविशेषणा।

त्वेनाविवक्षितो न्यासंगतिरिति वाच्यम् । पदत्वे सति तत्त्वमिति तदर्थानाम् प्रकृते च समुदायस्यातथात्वात् । वस्तुतस्त्वनुकर
णत्वेन सौत्रत्वाच्चेति मध्यमणिन्यायेन पूर्वोत्तरयोरन्वेति । अनुकरणत्वे नैत्यस्य निपातानुकरणे चेत्यर्थः । संहितायाम् अवि
वक्षायां तद्धारणन्नयुक्तम् । एकसूत्रे तदभावात् । तदुक्तमिकोयणचीति सूत्रउद्योते एकयोगत्वं द्वयोः संहितापाठमात्रे
णेति । अतएवेकोयणचीत्यत्र सौत्रत्वाद्वेङ्मुङ्वारयिष्यते ग्रंथकृता । यत्तु क्रमबोधकत्वेन वर्णबोधकत्वान्नकार
प्राप्तिरिति तन्न समूहस्य तत्त्वेपि प्रत्येकन्तत्त्वानपायादिति जरन्त आहुः । सौत्रेति । औपदेशिकश्रुतित्वस्य स्वयमेव वक्ष्य
माणत्वेन छन्दस्त्वादित्येव वक्तव्ये छन्दोवत्सूत्रमित्यतिदेशप्रवर्तकं सौत्रत्वादिति कुत उक्तमिति तदाशयं स एव प्रष्ट
व्यः । अन्येतु सूत्राणामिदं सौत्रम् पाणिनिसूत्रमूलभूतंतद्रूपकारकं वाक्यमित्यर्थः । तत्वात्सौत्रत्वाच्छान्दसत्वादिति यावत्
अतएवाणपि सफलः अतिदेशप्रवृत्तावभिप्रेतायान्तु सूत्रत्वस्यैव तत्प्रवृत्तिप्रयोजकत्वेन तत्वादित्येव वदेतामित्याविष्कु
र्वन्ति तदाशयं । इदं पंचम्यंतमपि तृतीयांतवत् गुणेत्वन्यापेति न्यायाद्व्याप्तिपदिकत्वप्रतिबंधहृता एवं विभक्त्युत्पत्तिप्रतिब
धकम् । एतेनातिदेशाल्लुगिति वक्तव्ये शास्त्रबाधोक्तिरसंगतेत्यपास्तं । जानन्तु किं अनुमान्यन्ते व्याख्यानेपि वा शास्त्रहृया

कारादिवर्णरूपविशेष्यरूपस्य शक्तिग्रहोपजीव्यस्येत्यर्थः। विरोधात् कृते संधौ तत्सन्निपातविघातः स्यादेवासन्निपातश्च
तियोगिनो रूपादानग्रहस्यापेक्ष्यमाणत्वात् एवंच कैय्यटः सम्यगेवेति चेन्न। पूर्वापरीभावांशे भाष्यादितस्त्यागेपि अन्यत्र
त्यागे मानाभावादिति च भाव इति व्याचक्षते। निर्णयसंभवादिति। यत्वेनम्प्रतीकमुपादाय अनेन शास्त्रप्रारंभ एव संदेहो
त्पादकशब्दप्रयोगस्याकौशलोन्नायकत्वादाचार्येण पराकृत इति संहितायाः अविज्ञाया वीजप्रदर्शनमिदं कैय्यटोपा
ध्यायानामिति सूचयति· अन्यस्यानिर्णयादित्येव वदेदिति व्याचक्षते। तत्राचार्यपदेन ·महेश्वर उत पाणिनिः। नाद्यः।
तस्य चतुर्दशसूत्रीप्रारंभकत्वेपि यावत् शास्त्रप्रारंभकत्वाभावेन शास्त्रेत्यादिग्रंथासामंजस्यात्। नांत्यः। मूलाभावाद्
ति वक्तव्यं। सामर्थ्ययोगादिति। यत्वत्र ल्यब्लोपे पंचमी। सामर्थ्ययोगं विहाय इति भट्टाः। तत्कथं संगच्छते। किं तस्य
फलं इति त एव प्रष्टव्याः। निष्प्रयोजनत्वरूपानर्थकेति। निष्प्रयोजनत्वरूपानर्थक्याभावे सतीत्यर्थः। तद्रूपानर्थ
क्यप्रतिपादकमंत्राख्यानभाष्येण न विरोधोभिधेयपरत्वादित्यर्थः। तृतीयांतत्वे तूभयोरप्यानर्थक्यप्रतिपादकत्वेन
संगतौ हेतुत्वानापत्तिः। वेदपारंपर्येणेति। परंपरैव पारंपर्यं गुरुशिष्यपरंपरेति यावत्। वेदसंबंधिनी या सातर्य्यसर्यमा

णं॰ वेदस्यये ऽध्यापकाये चाध्येतारः तैरधीयमानत्वादध्यायमानत्वाच्चास्यापि वेदत्वमिति भावः। अंत्यवर्णचतुर्दशेति। अ
न्त्यांत्यवर्णाश्चतुर्दश यस्मिन्समूहे स्वरूपेण तत्प्रतिलिंगतानुबंधस्वरूपं सरूपं समासांतः सम्यक् यथोचितं उपनत्समीपे कृत्वा आ
समंतात्कथितं इत्यं तं भट्टा आहुः। अक्षरसमाम्नायमित्याचक्षते इति। केचित्तु तं खल्विममक्षरसमाम्नायं ब्रह्मराशिरिति
हेतोर्न भुक्त्वा नानक्तं प्रब्रूयादिति ऋषयो ब्राह्मणेभ्य आचक्षते इति। शाकटायनोप्याह इत्यन्वयः। आहेति त्वन्मतइत्वाध्या
हीयते। कीर्तयिष्यंतीत्यादौ शतृ। तासीनुमः अपर्णान्तुम इति वाक्यस्यैकदेशस्य शतास्त्रीमपणो मित्यस्यानुकरणान्नानुपप
त्तिः। यथा श्रुते कथयइत्यस्य अव्यवहिते प्रावाचेत्यत्रान्वयेपि दुर्वच इति व्याचक्षते। परे त्विति। केचित्तु नतु ज्ञानलाघवान्न
लवैयर्थ्यमत आह। किं चास्येति अत्र हि प्रत्याहारज्ञानस्यैतवाप्यावश्यकत्वान्नतल्लाघवमिति भावः। यवतेति। पत्वेत इत्य
त्रपवतः इको यणित्यत्र यर् इको चि इणो यणित्यत्र यरइणः यणादिपरं यादिपरं इत्यादि इत्यादिन्यासे लाघवमिति भावः। य
त्वित्यणः यणोमयो इत्यादौ यस्येति न्यासेन ततन्त्रासु णकारलेवा। अत एव बहुष्विन्युक्तं न सर्वेष्विति। एतेन प्रत्युक्तं नैव गौ रामः
रवमित्यपास्तं नत्वणोच्चारणं अपोपधातु योचि॰ ङेर्यः इत्यादौ दोषाभावाय यकारेण कारेण र प्रत्याहारेण र प्रत्याहार इति ४

ज्ञापनार्थम्। यथणोः पर्यायत्वाल्लाघवाभावश्चेत्यत आह। किंचानुबंधेति हेतोरव्यापकत्वादिति अनुबंधा अच्प्रत्याहारेग्रहणगृह्यमाणताशून्याः प्रत्याहारसिद्धेः प्राक्लुप्यमानत्वात्। इत्यनुमितौ हेतोः पक्षतावच्छेदकावच्छिन्नवृत्तित्वरूपव्यापकत्वाभावापत्तेरित्यर्थः। तदुपपादयति नन्वित्यादिना। इल्लोपयोरभावेऽस्तु तेन मम तु अकारेऽनुबंधत्वस्यैवाभावेन न क्षतिः। नन्वस्तु प्रत्याहारार्था अनुबंधा इति भाष्यात्तद्बोधकसूत्रस्यानुबंधत्वं पक्षतावच्छेदकं न तु केवलानुबंधत्वं आकारे च तदभावान्नाव्यापकत्वं हेतोः। किंच प्रत्याहारसिद्धेः प्रागित्यस्य कतरोऽर्थः। यावत्प्रत्याहारसिद्धेः प्राक्लुप्यमानत्वमर्थः उत यत्प्रत्याहारे यदनुबंधग्रह आपद्यते तेन तत्प्रत्याहारसिद्धेः प्रागित्यर्थः। नाद्यः हल्प्रत्याहारसिद्धेः प्राग् चादेरपि लुप्यमानत्वाभावात्। द्वितीये भाष्ये जित्युक्ता विशिष्यैव पक्षतावच्छेदकस्य वाच्यतया लणित्यत्र साकारे तदभावान्न तदापत्तिरतो लक्ष्यासिद्धिमाह। प्रत्याहारेत्यादिनापत्तिश्चेत्यं तेन। चकारो व्यापकत्वापत्तेः समुच्चायकः। न वा द्वितीयान्तस्य ग्रंथस्य च मणिन्यायेन पूर्वोक्तापत्तौ उत्तरयोश्च तयोरन्वयः। वस्तुतो हेतुद्वयाव्यापकत्वापत्तिरित्यर्थः। शेषं पूर्ववत्। नन्वनुनासिकत्वसमानाधिकरणजातिनिर्देशः उत ह्रस्वत्वसमानाधिकरणजातेः तत्राद्ये आह अनुनासिकेति। अंत्ये आह सोसीत्यादौ। वस्तुनो गुणाभेदकत्वस्याव्यापक

स·भ जातिनिर्देशस्यचभगवदभिमतत्वेनसर्वत्रदोषइतिबोध्यं।एवंचसोस्यादिरितिनिर्देशरूपाचारोत्रसंभवतितद्वेषस्ययेष्टंव्या
ध् पकत्वंतृतीयस्यभज्येतइतिनायमित्संज्ञकइतिसिद्धं अनित्संज्ञकत्वमेवद्रढयति।अतएवेति।वार्तिकार्थस्तुगृह्यन्तएभि
स्तानिग्रहणानि अचांग्रहणानिग्राहकाणीतियावत्।तेषुइउणादिसूत्रेषु।अधिकरणेसप्तमी।प्रत्याहारेनुबन्धानाम्।अजा
दिसंज्ञार्थमनुबध्यमानानांणादीनामित्यर्थः।निमित्तात्कर्मयोगेतिसप्तमी।फलंहितत्तन्निमित्तंप्रत्याहारस्यफलत्वमच्च
न्त्वकरणस्यतत्सिद्धिविषयेच्छाधीनत्वात्।कर्मयोगस्तुप्रत्याहारस्याजादिसंज्ञारूपस्यसमूहस्यावयवेनानुबन्धनंकर्मणा
णादिनासमवायरूपयोगसत्वाद्बोध्यतइति।यएतइत्यतःप्राक्प्रत्याहारेवर्णसमाम्नायेइत्यपपाठः।योनरुत्वापत्तेःभा
व्यःभावाच्च।नहल्प्रत्याहारइतित्वन्मतेतुसकलप्रत्याहारमूलभूतत्वात्।हलंशेएवंतदाशंकासमाधानोचित्येनतदसङ्गतिस्स्या
द्वैवानन्विरम्भाष्यंहश्यादिषुटादिग्रहणानापादनादुपलक्षणतयात्वयापिनेयम्। अजित्युक्तिस्त्वाचाद्यमानग्रहणकानांप्रा
थम्यादितिनास्माकंप्रतिकूलमित्याशंकते।नचहश्यादीति।आ रीति।आदिनेण्।एवम्चरामष्टीकते।अठसित्यत्रोत्वपत्वे रामः
स्यातामितिभावः।तदघटितेति।हलघटितेत्यर्थः।यद्वा तेनोच्चारणार्थवर्णेनघटितास्सहिताइदघटिताहादिशब्दास्तेषांप्रत्याहारेतच्छ
ब्दबोधकेइत्यर्थः।इणादेरपिहादिबोधकतयातत्वापत्त्यात्तत्रापित्तेषांग्रहणंस्यात्।अजादीनांतुतत्रायंसमाधिः।एतदर्थमेवइदघ

टितिक्रमम्।अन्यथाप्रत्याहारेऽणित्येववदेत् नचपुनःपुनरितिभाष्योक्तेः सचारितार्थ्यम्।यथापूर्वाचंगृहीत्वान्यानुबन्धानामक्लि
ष्टस्यस्पष्टत्वोपपत्तिस्तथाहय्वेनाद्युपपत्तौयाद्यकारोच्चारणवैयर्थ्यात्।अतएवपुनःपुनरितिवीप्सितम्।ननुतदुच्चारणे नोच्चारणा
र्थवर्णरहितानांतादृशप्रत्याहारेनग्रहणमितिज्ञापनेममापिनप्रतिकूलमतआहानहीष्यतेति।प्रयोगाभावएवभाष्यादिनास्य
र्थेन्नतूपलक्षणत्वेइतिभावः।ननुराजाहसखिभ्यष्टच् अतष्टावित्यादिप्रयोगादुपलक्ष—णेएवतात्पर्य्यंभाष्यस्यानोबाध
काभावेपिसाधकाभावान्नानुनासिकत्वमित्याशयेनोपसंहरति।तस्मादिति।वस्तुतस्तुननुसाजात्येनटस्यप्राप्याद्ग्रहणंस
दित्याशंकते।नचहशेति।अनभिधानाच्चेति।चेनतएवारुचेर्लोपवलवत्त्वेहेत्वन्तरसमुच्चयः।पूर्वोक्तारुचेराह।तस्मादि
तिइत्यर्थः।यद्वा हशादिग्रहणेटादिग्रहणंकथंनेत्यस्यसंग्रहायकौस्तुभोक्तमेवव्याख्यानमुचितंवार्त्तिकस्यभाष्येऽस्तु
इत्यप्यजादिशब्देष्वित्यर्थकंसूत्रचतुष्टयोपादानमपिचतुर्दशसूत्र्या उपलक्षणम्।अस्तुहलस्तुचसमाधिवैषम्यंकुत
इतिशंकायांस्तवापिदुःसमाधेयत्वेनोपलक्षणत्वेचतुर्णामेवग्रहणंकुतइत्यादिमांप्रतिमाचोदयीः।अनुबन्धानाग्रह
णस्यानिष्टत्वेतान्—मेवोचीचरइतिशंकांनिरा—सायभाष्येप्रत्याहारार्थाइति।एवञ्चानुनासिकत्वंप्रतिज्ञानतोनश

स·म· कापरभाष्यविरोधस्तृतीयहेतोर्व्याकत्वापत्तिस्तु तत्त्वापि दुःपरिहरा॥ हल्प्रत्याहारसमकालमेवब्लादिप्रत्याहारसिद्धे
६ प्रतिबंधकाभावेन ब्लादिप्रत्याहारेष्वयकारादिप्रवेशस्य दुर्वारत्वादित्याशयेन शंकते। न चेति। हश्णादीत्यादिना ब्लादि
नां ग्रहणमुपलक्षणं यादेः। उभयमपि दूषयति। न पुनरित्यादिना। तृतीयहेतोर्व्यापकत्वं समर्थयते: कौस्तुभकृतोपीदमा
वश्यकमिति इत्याशयेन शंकिते दूषणांतरमाह। हकारादिषु पुनः पुनरित्यादिना। वक्तुं शक्यत्वादितस्याग्रे लकारस्ये-
णादिसंज्ञानापत्तेरनुनासिकत्वप्रतिज्ञानैष्फल्यापत्तेरिति भावः। अप्रामाणिकमिति। अनङादिषु प्रयोगसमवायित्वमि
यानुनासिकत्वांगीकारेपि आवश्यकेन सोस्य मादिनिर्देशेन प्रत्याहारबोध्यत्ववारणेन हत्त्वमानाभाव इति। अत एवा
ह ऊ सूत्रे उद्योते विधेय विषये उच्चारणार्थस्यानुनासिकत्वमावश्यकमित्युक्तमिति भाव इति दिगित्याहुः। तुल्यजातीये
ति। ननु तुल्यजातीयेत्यत्र किं तेन साजात्यं विवक्षितं अच्त्वहल्त्वाभ्यामिति तु नान्योन्याश्रयापत्तेः। साजात्ये सति तेसंज्ञ
नयोश्च सत्योः साजात्यमिति चेत् शृणु। औकारवृत्ति अच्त्वाव्याप्यधर्मानवच्छिन्नत्वेनाचि। अच्त्वाव्याप्येणत्वादिमादा राम:
यासंभववारणाय। तद्वृत्ति अकलादि आदायतद्वारणाय द्वितीयम्। हकारावृत्तिहल्त्वाव्याप्यधर्मानवच्छिन्नत्वेन। ६

हलिति। तद्भाष्याद्वृत्त्यादिग्रमादाय नटवृत्तियत्त्वादिग्रमादाय च तद्वारणायोभयम्। अमुं हल्पदाभ्यां स्वस्वव्यंजनयोर्वि-
वक्षणाच्चेत्याहुः। नविभक्ताविन्यादावितिः। आदिर्नोपदेशे जिन्यस्य स्वपूर्वस्य संग्रहः। हलंत्यमित्येतद्वाक्यार्थजिज्ञासायां
उपस्थितपूर्वोत्तरसूत्रयोः सार्थक्यसंपादके वाक्यार्थे निष्पन्ने पश्चाद्धल्पदार्थः क इति विशेषजिज्ञासायां आदिरंत्येनेत्ये-
तद्वाक्यार्थोपायाद्वृत्तिरिति भावः। प्रकृतसूत्रस्थं भाष्यमपीहानुकूलं। अन्ये तु प्रथमं आदिरंत्येनेत्येतद्वाक्यार्थजिज्ञासा-
यां अनुपसंजातविरोधन्यायेन कृत्रिमत्वज्ञानाभावेन कृत्रिमाकृत्रिमेत्यस्याप्रवृत्त्या च हलिति सूत्रेंत्यमिति निर्दिष्टेर्थे
तेनो नविभक्ताविन्यादिवेय्यर्थ्यानुसंधाने आवृत्त्या अर्थांतरस्य युक्तत्वादिदमसत्। भाष्यं तु एकदेश्युक्तमेवेत्याहुः दशसूत्रावृत्त्या-
विति। अन्यथा हकारादेः संज्ञा उत अकारादेरिति दुर्निश्चयं स्यादिति भावः। कृपमृतावितिः। अशोकवनिकान्यायेनैतदु-
क्तिः। ज्ञापकादिनान्यवारणे तु तुरुस्तुशम्यमेत्यादिज्ञापके रयमर्थोपि व्यावर्त्येतेत्याहुः। मनो व्यापारगौरवमितिः। ननु
त्र किं गौरवं। योगविभागप्रयुक्तं तु नः आवृत्तिं कुर्वता त्वयापि वाक्यार्थद्वयस्वीकारात्। नियमप्रयुक्तं तु हल्पदाक-
रणेन निमातव्यं। ज्ञापकं त्वावृत्तिसत्त्वेन विभक्तौ त्यादाश्रयणीयमेवेति न नन्कृतमपि। तर्कितन्यासेऽन्योन्याश्रयश्च।

स॰भ॰ केवलेपि रन्तरिति चेत्सत्यं। मध्यमो वर्ण इति। वृद्धिगुणादिसंज्ञास्विव संज्ञात्वावगतिः सामानाधिकरण्यात्। तथा च मध्यमो
७ वर्ण आदिरित्यादिसंज्ञको भवतीत्यर्थः। रूपसिद्धिस्त्वा एत इत्यत्रै ओतिपररूपं कृत्वोमाङोश्चेति पररूपकरणेन बोध्या। अ
तएवाङ्त्रारूढौ तु न मानमिति। न चाहत्तोय त्मानं तदेव मानं तत्रेति वाच्यं। शंकापरभाष्यादितस्तदभावानुमितेः। ज्ञा
त्सूत्रमिति। यत्तत्रप्रकरणे द्विर्वचनेनैव निर्दिष्टत्वमिति पाठकस्तन्न। नपुंसकमनपुंसकेनेति एकवचनं। तस्याप्येक
शेषस्य न्यायत्वात्। स्पष्टं चेदं प्रकृतसूत्रे कैय्यटे एव। नन्वेवमपवादबोधात्पूर्वमुत्सर्गवाक्यसल्लक्ष्यसंस्कारकत्वे।
पपतो उदासीनविषय इवापवादविषयेपि प्रवृत्त्यापत्तौ पश्चाद्भुक्तवन्तं प्रति ब्रूयान्माभूक्था इति तेन किं कृतं स्यादि
तिस्थानेन्तमसूत्रभाष्योक्तन्यायबोधितापवादशास्त्रवैयर्थ्यापत्तिमूलकेन प्रातिपदिकार्थसूत्रभाष्यपठितेन
पूर्वमित्यादिन्यायेनोत्सर्गवाक्यार्थबोधात्पूर्वमपवादवाक्यार्थबोधस्यावश्यकत्वसूचनेन प्रागुक्तरीत्या सुप्तिङु
निष्पत्त्यभावेनान्योन्याश्रयस्तदवस्थ एवात आहुः पूर्वं ह्यपवादेत्यादि। इति वाक्यस्येवापवादशास्त्रस्येति। वा रामः
क्यस्येवापवादशास्त्रस्य वैयर्थ्यापत्त्या चापवादशास्त्रपर्यालोचनेनेत्येव पाठ इत्यन्ये। न्यायानङ्गीकारेपीति। ७ न्या

ननूक्तलुगादिस्थलेनथास्तुवंनत्वेपिनस्यलोपइतिविषयेनैवंवक्तुंशक्याएवंनिर्दोषएवेत्याशंक्येदंसुलभमिति।दि
गिति।दिगर्थेस्तुतुस्मभिन्नाहलइतइतिप्रथमवाक्यार्थेनपादोनामित्वंततोविभक्तिपदार्थेनिश्चयेविभक्तिस्थतुस्म
भिन्नाहलइतिद्वितीयवाक्यार्थेनाविभक्तिस्थतुस्मानामित्वमिति।नन्वेवन्नाइहलावित्यत्रापिआक्षरसमाम्नायि।
काअचोहलश्चनमिथोनसवर्णाइतिप्रथमवाक्यार्थेपिअणुदित्सूत्रबोधानंतरंअचस्तदृहीनाश्चहल्भिर्मिथोनसव
र्णाइतिद्वितीयोवाक्यार्थःस्यादेवतथाचाकारप्रश्लेषोव्यर्थःवाक्यापरिसमाप्तिप्रतिपादकभाष्यासंगतिश्चेतिचेन्न
नविभक्तावित्यादौविभक्तिग्रहणसामर्थ्याद्वितीयवाक्यार्थांगीकारेपिअन्यत्रतदंगीकारेमानाभावात्।स्पष्टाचेयंरी
तिःप्रकृतसूत्रेभाष्यकैले यथासंख्यसूत्रसामर्थ्येनतत्रतथांगीकारेपिअत्रतथाकल्पनेमानाभावादित्यादिना।नन्वे
वंहलंत्यमित्यस्यबोधकालेउपदेशेजितिनाक्रम लावित्यनयोर्बोधाभावेनाणुदिदित्यस्यवाक्यार्थोज्ञानेनोदितःसव
र्णग्राहकत्वाभावान्नविभक्तावित्यत्रतुशब्दस्यतवर्गबोधकत्वाभावेनतदजननासंभवाद्विभक्तिस्थनकारस्यत्वापत्तिः
पकारस्येवउर्वीरातुशब्दस्तुतिचोरितिवदुच्चारणार्थोकारेणनकारमात्रबोधकइत्येवस्यादितिचेन्नापरस्मिन्नित्यादि।

सु. म.
८

निर्दिष्टैरिहत्यहल्पहस्यनकारभिन्नतत्परत्वनिश्चयात्। एवं तर्हि वर्गग्रहणं व्यर्थमिति चेदस्तु तथा। नाज्झलाविन्यस्य
प्रयत्नभेदप्रयुक्तसावर्ण्याभावादनुवादत्वमिति मते तु शाब्दस्यादित्संज्ञकायत्वमिति मतेन उदितः सवर्णग्राहकत्वस्य पू
र्वमपि संभवेनादोषाच्च। मतान्तरेऽपि लोपादिनेव जातनिवृत्तिरङ्गीकाराच्च। न विभक्तौ तस्य लुप्तनिर्दिष्टेन कारइत्यस्या
पि वक्तुं शक्यत्वाच्च। आदिरन्त्येन॥ उभयोपादाने तु एतदन्ते न दोषो लोके इति पाठः। प्रतीतिर्लक्षणावश्यकत्वे हेतुः। ल
क्षणस्यानापत्तौ हेतुत्वबोधकः। सोऽन्त्य इतीति। इ तेति किमिति। अस्य चतुर्दशसूत्रैकवाक्यतया तत्सूत्रान्त्यस्य ग्रहणेन त
स्य चेत्त्वस्यैव सत्वादिति प्रश्नः। मा भूदिति। नन्वेकवाक्यत्वेऽपि सूत्रान्त्यस्यैव ग्रहणे मानाभावेन विवक्षितसमुदायान्तत्वस्य भ
णादेवापि सत्वम्। परस्मिन्सतीत्यादिलक्षणामपि विवक्षानिबंधनं। अत एवेगादिप्रत्याहारसिद्धिः। अन्यथा तत्रसूत्रा
देरेवग्रहणे ऽसिद्धिः स्यादेव। एतेन पूर्वस्य दीर्घो णइति ज्ञापकाद्येन प्रत्याहारस्तदवधिकानामेव ग्रहणे सिद्धेऽन्त्यपदसामर्थ्या
न सूत्रान्त्यग्रहणे न सिद्धे इति सुगतं। एवं हि अन्योन्याश्रयश्चानेनापरं लाघवमित्यपास्तं। एवं च ग्रहस्येत्यादिज्ञापकात्तयो राम:
बोधकस्तदवधिकानामेव पूर्वेषामाक्षेपसिद्धे आदिग्रहणसामर्थ्यात्सूत्रादेरेव ग्रहणात्प्रत्याहाराद्यसिद्धिः स्यात्। ज्ञा ८

पकारस्त्रावयवप्रत्याख्यानेवहूपपन्नवापत्तेश्च। सूत्रेषु। वर्णसमाम्नायस्थेषु। तदभावादिति। लोपस्यसामर्थ्याद्भा
विफलाभावात्संज्ञापिनेत्यर्थः यत्तु शक्तिग्रहात्पूर्वमर्थवत्त्वाभावेनप्रातिपदिकत्वाभावात्व्यवसितान्त्यत्वाभावेनसंज्ञा
प्राप्तिरेवेति। तन्न। यत्रसतिप्रातिपदिकत्वेपरिष्कृतार्थत्वंभावितत्रसंज्ञेतितदर्थात्। अन्यथारामइत्यादावपिसति।
प्रातिपदिकत्वेपरिष्कृतार्थवत्त्वमित्यात्माश्रयस्यात्। आदिरन्त्येनेतिशक्तिग्राहकप्रवृत्तिस्तुनफलम्‌ इगित्यादिषु
कादेरित्त्वेपिचतुर्दशसूत्रीसम्बन्धिविवक्षितान्त्यत्वाभावेनइदन्त्यसदृशेनेत्यर्थोवश्यकतयासंज्ञाविरहेपितत्सूत्रे
रित्याह। अन्त्येनेत्यस्यदंतेति। ननुतत्तत्सूत्रेषुलोपाभावस्यसामर्थ्यात्कल्पनापेक्षयाचतुर्दशसूत्र्यामेवोच्चारणसाम
र्थ्यात्तदभावः कल्पनामेवलघुत्वपदेलक्षणाश्रयणन्नहलि अकारग्रहाभावायावश्यकत्वमेतेषांप्रत्याहारवाच्य।
तापिनेतिचेन्न। व्यक्तिपक्षे ऋलृक्सूत्रस्थस्यैगादिशब्दस्थस्यकस्यभेदात्तथार्थावश्यकत्वेनतदेकवाक्यतया। जाति।
पक्षेपितथैवोचितत्वात्। तयासतिलोपश्चबलवत्तरइतिभाष्यस्यासंगतिप्रसंगश्चतदेतदाह व्यक्तेति। नन्विणादि।
प्रत्याहारेजगादीनांग्रहणंमाभूदितिकथमुक्तमृकारादीतिवक्तव्यमतआह। अचिस्तुइतीति तारपनी। दलत्यमसिद्ध

स॰भ॰ ६

त्वादिति। अलोन्त्यात् हलोनन्तराः नतु रूपस्समानाधिकरणः निति ह्रान्यतोपिति ह्रतोन्यादाविति भावः। इत्संज्ञायाः परि-
त्राणेति पञ्चमीसमासः। नान्तरीयेति। अन्यनिष्पादकफलनिष्पाद्यत्वेनेत्यर्थः। उच्चारणेपीति शेषः। तेनेति। अध्याहारे।
णेत्यर्थः। आद्योच्चारणकाले इत्संज्ञाभवनमित्यर्थे तु न स्यात्। तत्रार्थे वाधश्च। तत्कालात्पूर्वमनभिव्यक्त्यात्तत्काले इत्सं-
ज्ञाया दुर्वचत्वात्। नाज्झलाविति सूत्रभाष्यविरुद्धत्वाच्चानद्व्यवधानेति। यथोद्देशे इदम्। अनुबन्धविनिर्मुक्तस्यैवपदार्थो-
पस्थितिरित्यर्थः। गुरुकुलवत्समासः। नन्वेवं तस्य लोपे न तच्छ्रवणात् तदुपस्थितिर्वाच्येति तस्यैवार्थवलात्ततो विभक्त्यनु-
त्पत्तिरुचिता। अनुबन्धस्तत्स्थेनैवाच्यात आह। घुङित्यत्रेति। तत्र संज्ञायामपि लोपोनोच्चारणसामर्थ्यादन्यथा स्व-
रूपप्रतिपत्तिरेवनस्यादितिभावः। वैयाकरणेति। व्याकरणशब्दाट्ठकोऽनुदात्तादेरञ्नित्यञ्चेत्यत्रि आद्युदात्तवैयाक-
रणशब्दे चितइत्यन्तोदात्तत्वापत्तिरित्यर्थः। यद्यपि इत्त्वेपि प्रत्याहारसिद्धिरूपफलसत्त्वेनानर्थक्याभावात्तदुपस्था-
प्यनतत्कार्य्यमितिसमाधानं वक्तुं शक्यं तथापि न्याय्यं समाधिमाह। तत्त्वाभावेति। प्रातिपदिकान्तत्वात्तु नतत्वम्।
पत्रसंज्ञातफलाभावेन तद्विषयके संज्ञाशास्त्रस्य वाक्यस्यानुपपन्नत्वात्। घुङादौ तु तदनुबन्धसामर्थ्याद्वाक्यमुपपन्न-

रामः ६

वनेइति तत्सामर्थ्यादुपस्थाप्यैकार्थ्यमिति बोध्यम्। नविभक्ताविति तस्यानर्थक्यं परिहरन् उपसंजनिष्यमाणेति न्यायमू
लकमर्थमाह। न विभक्तावित्यादीति। आदिनाऽत्यपादिपरिग्रहः। यत्र तु सुङस्योरोः सुपोर्न विभक्तीत्यस्य न प्राप्तिस्त
त्र त्वनुबन्धविविनिर्मुक्तस्यैव विभक्त्यादिसंज्ञाः पूर्वमित्संज्ञाया अप्रवृत्तौ बीजाभावादिति बोध्यम्। अत एवेति पदा
र्थोपस्थितेरनुबन्धविनिर्मुक्तत्वादेवेत्यर्थः। अन्यथा तदानीमनणन्तत्वादाशंकासमाधानयोरसंगतिः स्पष्टैव॥ प्रत्ययइ
त्यस्यादेशाद्युपलक्षकत्वादेवाह। अप्रत्यय इत्यनेनेति। अनवयवा इति। उपस्थापकानवयवा इत्यर्थः। कदाचित्तत्रेति।
तदुपस्थाप्य इत्यर्थः॥ यथाहश्चत्यादौ चकारादिः। सुहृडादौ संयोगान्तलोपेनापहाराद् उक्तेः कदाचिदिति। नदोष इति।
इत्वाभावरूप इत्यर्थः। सर्वादेशत्वाभावरूपश्च सः। एकान्तत्व इवानेकान्तत्वेऽपि यन्निष्कृष्यावसितत्वमादाय संज्ञातत्कार्य
न्तत्रैवेत्यंगीकारान्न च वैयर्थ्यमत आह। तस्य लोपेति। नकारेत्संज्ञक इति। नकारेत्संज्ञैर्बोध्यस्तद्भिन्न इत्यर्थः। एवमग्रेपि।
प्रकृतसूत्रेति। व्याख्येयत्वेन प्रक्रान्तोपदेशपदलाभावधिभूतोपदेशेजिति —— इत्यर्थः। एवमग्रेपि प्रकृतसूत्रेति। व्या
ख्येयत्वेन प्रक्रान्तोपदेशपदलाभावधिभूतोपदेशेजिति इत्यर्थ इत्याहुः। अन्ये त्वनुवर्त्तमानेशब्दशानचावितिपुनस्तत्र

स॰भ॰ हणेनलक्षस्यानिकत्वादिरूपधर्मसम्बन्धत्यागवत्सौत्रेइत्संज्ञकत्वरूपधर्मसंबन्धस्यापित्यागात्सानुबन्धयोरेवपराम-
१० र्शः।तदुक्तंवार्तिककृता।नैवचनमसंसर्गार्थमिति।भाष्यकृतापितथैवव्याख्यातम्॥अतएवकैयटेनापिशास्त्रस्थानचोरू-
पमात्रंपरामृश्यतइतिलट्स्थानिकत्वादिधर्मासंबद्धयोरपिसंज्ञाभवतीत्यर्थइतिवदनादिशब्दउपात्तः।सच्छब्देनतयो-
र्विधानानन्तरमनुबन्धानामित्संज्ञाभवत्येवेत्यलम्।एवंक्तक्तवतूनिष्ठेत्यादावपिनदोषः।अनुबन्धविनिर्मुक्तस्यैवोप-
स्थितिरितिनियमस्यविधेयत्वेनोपस्थितप्रत्ययाद्यनुबन्धविषयएवसत्त्वेकारणश्रुतनिष्ठासंज्ञासम्बन्धस्याश्रुतेत्संज्ञासम्ब-
न्धादन्तरङ्गत्वात्प्राबल्येनचानुबंधविशिष्टस्यैवसंज्ञाविधानादतएवसुब्विभक्त्यादिसंज्ञास्वन्तर्गतानामेवेतिप्रागुक्तम्॥
संज्ञाविषयेसर्वत्रैवमेवेतिनदोषलेशशङ्कापिस्यादेवदोषेति।न्यायोपिविषमः।अनुत्पन्नस्यसतआदेशविधानानुपपत्त्या
वाक्यभेदेसतिप्रथमवाक्येनोत्पन्नस्यसतःप्राप्तेत्संज्ञाद्वितीयवाक्यविहितादेशानन्तरंनोस्त्वितिपूर्वपक्षिणोक्तम्।वाक्य-
भेदेगमकाभावेसन्नासतिविधायोपदेशपदानुवृत्तिमभिप्रेत्यचसिद्धान्तिनानानुत्पन्नेसतिप्रकृत्याभवितव्यम्।यदाचोत्प- रामः
न्नस्सन्तदाकृतसामर्थ्योपज्ञमीतिप्रकृतिर्नैभविष्यतीत्युक्तम्।तथाचतत्रवाक्यभेदसत्वाद्विधेयत्वेनोपस्थितप्रत्ययविष- १०

येसंज्ञयादेशप्रतीक्षणाभावेपिश्नोननिष्ठासंज्ञासंबंधमन्तरङ्गमित्संज्ञाप्रतीक्षते।तस्माच्छ्यस्यैकदेशमुक्तत्वाच्च ननुकार्यकालेप।
कवाक्यतयाविधानाद्विधेयत्वेनोपदेशत्वमेवनत्वक्तवतोरितिवाच्यम्।यथोद्देशेतदभावादितिपक्षद्वयेपिवाक्यैकवाक्यत्वेनवि
धेयत्वाभावाच्च।निपातनादित्वकल्पनेनादृष्टवचनकल्पनाद्गुरु।अगतिकगतिश्च।यएवतुपित्वालाभादित्याहुः।।भगवताक्त
नमिति।एवञ्चभावेघञातयार्थोक्तिरयुक्तेतिभावः।ननुवाऽहुलकाश्रयणमेवतत्रदोषइतिनदेकदेशमुक्तिरेवातआह
किञ्च।भावेति।करणसाधनानुवृत्तौतुविहितस्यापिशासनकरणत्वेननतत्त्वात्तस्मादपीतिभावः।विहितेति।एवञ्चउपस्थाप
कस्योपदेशेविद्यमानत्वेपिप्रक्रियावाक्यसमवायिनस्तत्वाभावादितिभावः।ननूपस्थापकएवसंज्ञालोपयोःप्रवृत्त्यानि
रनुबन्धकस्यैवप्रयोगसमवायित्वमितिनदोषोतआह।परस्येति।एतेनविहितेपरस्यासत्त्वेनकादेरन्त्यत्वाद्दृत्सुसाध्येचिन्त्य
इत्यपास्तम्।।सामर्थ्येनेति।आदिरपिव्यपदेशिवत्त्वात्तत्त्वमेवेतिननदव्यावृत्तये।इदमेवाभिप्रेत्यसर्वोपिहल्ततन्तंसमुदाय
स्यान्त्यइत्युक्तंभाष्ये।।ननुश्वनित्यादिप्रातिपदिकव्यावृत्त्यानानुवृत्तिवैयर्थ्यमतआह।अतएवेति।अनुस्यानेति।एवंम
न्यतेतस्यभावघञन्तत्वेआद्योच्चारणोविद्यमानमन्त्यमित्यप्यर्थेउच्चारणस्यान्त्यमितिप्रत्यासत्तेः।अयेतुमशक्यत्वाद्यक्तिः।

न्त्विति समुदायान्त्यस्यापि प्राप्नोतीत्युत्तिष्ठत एव न तत्। शास्त्रपरत्वे तु प्रत्यासत्त्या शास्त्रान्त्यस्यैव स्यादित्यनुपपत्तिरिति। धात्वन्ता
दिनेति। शास्त्रकृतान्तेन तत्त्वेन बोधितत्वादित्यर्थः। यच्चादेशान्तस्यैव तत्त्वं न त्वान्तस्य। तात्पर्य्यस्य तत्रैव सत्त्वात्। तात्पर्य्या।
ग्रहेवीजनुथमुप्रत्यय उकारः। ननु अस्थितपक्षे प्रयोजनदानभाष्यन्त्वेव प्रतिकूलम्। अनुत्तरार्थत्वे हि तत्रैव क्षोदं स
त्वान कर्त्तव्यमित्येव ब्रूयादिति मम तूत्तरार्थे मावश्यकतया लाघवाभावेन क्षोदो न कृत इति साधकमेवातो न नुवृत्तौ साध
कान्तरमाह। एवञ्चेत्यादिना नुत्थानमेव स्यादित्यन्तेन। फलाभावेति। अत्र यथा फलाभावस्तथा विवरणतो वसेयः। अव
सेयं तेचास्माभिः कालेन। स्थेग्रहणेति। गणादावपठितेत्यर्थः। उपदेशशब्द इति बहुव्रीहिरयम्। उपदेशः कर्त्तव्य इति श
ब्द इत्यर्थः। नन्वेवमिति। तस्य भावसाधनत्वार्थकत्वाभावे इत्यर्थः। अन्यथा चरमेण पोन रुन्क्यापत्तिः इत्युच्यमाने इति
इत्यनुवर्त्य विधीयमाने इत्यर्थः। तत्र। सूत्रद्वये। आदावित्यादिना व हो लोपेति। यत्रेति पूर्वेण समानाधिकरणाम्। त।
त्र खलु। स्थानिनि। हेतुमाहायेति। एवञ्च षष्ठी प्रकृतेः प्रागेव परत्वान्न रङ्कृत्वेनोपदेशोत्तरकालसूत्र एवेत्संज्ञोच्चारितस्य
कार्य्यं नुप्रयोग एवेति। निरनुबंधकस्यैव प्रत्ययत्वेन विधानान्त्यशब्द एव तत्र कार्य्यभागिति तदादेशस्य कृतस्यानुबंधक

वेनेइतितत्सामर्थ्यादुपस्थाप्यैकार्थ्यमितिबोध्यम्।नविभक्ताविन्यस्यानर्थक्यपरिहरन्नुपसंजनिष्यमाणेतिन्यायमू
लकमर्थमाह।नविभक्ताविस्यादीति।आदिनाप्रत्ययादिपरिग्रहः।यत्रतुसुङस्योरोट्सुपोर्नविभक्तीत्यस्यनप्राप्तिस्त
त्रत्वनुबन्धपिविनिर्मुक्तस्यैवविभक्त्यादिसंज्ञाःपूर्वमितसंज्ञायाअप्रवृत्तौबीजाभावादितिबोध्यम्।अतएवेति।पदा
र्थोपस्थितेरनुबन्धविनिर्मुक्तत्वादेवेत्यर्थः।अन्यथानदानीमनणत्वादाशंकासमाधानयोरसंगतिस्स्पष्टैव।।प्रत्ययइ
त्यस्यादेशाद्युपलक्षकत्वादेवाह।अप्रत्ययइत्यनेनेति।अनवयवाइति।उपस्थापकानवयवाइत्यर्थः।कदाचित्तत्रेति।
तदुपस्थाप्येइत्यर्थः।।यथाहृश्वत्यादौचकारादिः।सुहृडादौसंयोगान्तलोपेनापहारादुक्तंकदाचिदिति।नदोषइति।
इत्वाभावरूपइत्यर्थः।सर्वादेशत्वाभावरूपश्चसः।एकान्तत्वइत्वानेकान्तत्वेपियन्निष्ठव्यवसितत्वमादायसंज्ञातत्कार्य
न्तत्रैवेत्यंगीकारान्नचैवैयर्थ्यमतआह।तस्यलोपेति।नकारेत्संज्ञकइति।नकारेत्संज्ञेर्बोधस्तदभिन्नइत्यर्थः।एवमग्रेपि।
प्रकृतसूत्रेति।व्याख्येयत्वेनप्रक्रान्तोपदेशपदलाभावधिभूतोपदेशेजितिइत्यर्थः।एवमग्रेपि।प्रकृतसूत्रेति।व्या
ख्येयत्वेनप्रक्रान्तोपदेशपदलाभावधिभूतोपदेशेजितिइत्यर्थइत्याहुः।अन्येत्वनुवर्त्तमानेशब्दशानचावितिपुनस्तोग्र

स.भ. ग्निस्समुदायान्तस्यापिप्राप्नोतीत्युक्तिष्टत एव ननु। शास्त्रपरत्वे तु अन्त्यासत्याशास्त्रान्त्यस्यैवस्यादित्यनुष्ठितिरिति। धात्वन्त्या
११ दिनेति। शास्त्रकृतातेन तत्वेन वोधितत्वादित्यर्थः। यच्चादोषान्तस्यैव तत्वन्न चान्तस्य। तात्पर्य्यस्य तत्रैव सत्वात्। तात्पर्य्यं।
ग्रहेवीजन्तु थमुप्रत्यय उकारः। ननु अस्थितपक्षे प्रयोजनदानभाष्यनन्वेव प्रतिकूलम्। अनुत्तरार्थत्वेहि तत्रैव क्षोदं कृ
त्वा न कर्त्तव्यमित्येव ब्रूयादिति ममतूत्तरार्थमावश्यकतया लाघवाभावेन क्षोदो न कृत इति साधकमेवातो नानुष्ट्वतो साध
कान्तरमाह। एवञ्चेत्यादिनानुत्थानमेवस्यादित्यन्तेन। फलाभावेति। अत्र यथा फलाभावस्तथा विवरणतोवसेयः। अव
सेप्यते चास्माभिः कालेन। स्थेयग्रहणेति। गणादावपठितेत्यर्थः। उपदेशशब्द इति वहुब्रीहिरयम्। उपदेशः कर्त्तव्य इति श
ब्द इत्यर्थः। नन्वेवमिति। तस्य भावसाधनतयार्थकत्वाभाव इत्यर्थः। अन्यथा चरमेण पोनरुक्त्यापत्तिः इत्युच्यमाने इति
इत्यनुवर्त्य विधीयमाने इत्यर्थः। तत्र। सूत्रद्वये। आदाविव्यादिनावहो लोपेति। यत्रेति पूर्वेण समानाधिकरणम्। त
त्र खलु स्थानिनि। हेतुमाहोयेति। एवञ्च षष्ठीप्रकृतेः प्रागेव परत्वान्नरङ्गत्वेनोपदेशोत्तरकालसूत्र एवेत्संज्ञोच्चारितस्य राम: ११
कार्य्यं नु प्रयोगएवेति। निरनुवंधकस्यैव प्रत्ययत्वेन विधानान्तस्य शब्द एव तत्कार्य्यभागिति तदादेशस्य कृतस्यानुवंधक

वेनेइतितत्सामर्थ्यादुपस्थाप्येकार्य्यमितिवोध्यम्।नविभक्तावित्यस्यानर्थक्यपरिहरन्नुपसंजनिष्यमाणेतिन्यायमू
लकमर्थमाह।नविभक्तावित्यादीति।आदिनाप्रत्ययादिपरिग्रहः।यत्रतुसुङस्योरौट्सुपोर्नविभक्तीत्यस्यनप्राप्तिस्त
त्रत्वनुवन्धपिविनिर्मुक्तस्यैवविभक्त्यादिसञ्ज्ञाःपूर्वमित्सञ्ज्ञायाअप्रवृत्तौवीजाभावादितिवोध्यम्।अतएवेतिापदा
र्थोपस्थितेरनुवन्धविनिर्मुक्तत्वादेवेत्यर्थः।अन्यथानदानीमनर्थत्वादाशंकासमाधानयोरसंगतिस्स्पष्टैव॥प्रत्ययइ
त्यस्यादेश्याद्युपलक्षकत्वादेवाह।अप्रत्ययइत्यनेनेति।अनवयवाइति।उपस्थापकानवयवाइत्यर्थः।कदाचित्तत्रेति।
तदुपस्थाप्येइत्यर्थः॥यथावृश्चत्यादौचकारादिः।सुवृङादौसंयोगान्तलोपेनापहारादुक्तंकदाचिदिति।नदोषइति।
इत्वाभावरूपइत्यर्थः।सर्वादेशत्वाभावरूपश्चसः।एकान्तत्वइवानेकान्तत्वेपियन्निष्टव्यवसितत्वमादायेत्संज्ञातत्कार्य्य
न्तत्रैवेत्यंगीकारान्नचवैयर्थ्यमतआह।तस्यलोपेति।नकारेत्संज्ञकइति।नकारेत्संज्ञैवोध्यस्तदभिन्नइत्यर्थः।एवमग्रेपि।
प्रकृतसूत्रेति।व्याख्येयत्वेनप्रक्रान्तोपदेशपदलाभावधिभूतोपदेशेजिति ———— इत्यर्थः।एवमग्रेपि।प्रकृतसूत्रेति।व्या
ख्येयत्वेनप्रक्रान्तोपदेशपदलाभावधिभूतोपदेशेजितिइत्यर्थइत्याहुः।अन्येत्वनुवर्त्तमानेशब्दशानचावितिपुनस्तोप्र

स.भ. दीर्घादिति पाठः। अदसोसेरित्यत्र वक्ष्यमाणरीत्या निर्देशोपपत्तिः। असंधिः संहिताविवक्षया शाकलह्रस्वेनेदानीन्दीर्घ-
१२ स्यापि विधानाद्वा इदानीं ह्रस्वशासनानामकिञ्चि — त्वनुभाष्य एवस्पष्टम्॥ लुगापत्तिरिति। नचैतदभावे नित्यवि-
धिर्दुर्वारः। सन्नकृतलुगनित्याया अभिप्रायकतया भाष्यप्रयोजनकैयटोक्तन्नु दूषितमन्यत्रेति वाच्यम्। प्राप्तविभाषा-
णान्निषेधरूपतया निषेधानां बलीयस्त्वान्नित्यविधेरपि निषिद्धत्वात्। नचानन्तरस्येति न्यायेन ह्रस्वप्रयुक्तस्यैव नि-
षेध इति वाच्यम्ः योगविभागो मास्तुच्छे चेत्यत्रैव दीर्घादित्यस्यापकर्षोस्तु उभयत्र विभाषेयमिति भगवतोऽभिप्राया-
त्। कैयटमतेदूषणान्तरं दर्शयितुमाह॥ अनन्तरस्ये.ति। स्पष्टञ्चेदम्भाष्ये उच्चैरुः। तेषामन्त्वेपि ह्रस्वाभावादाह। हल-
स्वरेति। तेषामन्त्वे हि स्वरविधायके हेलांस्थाने हलो विधीयेरन्निति दोषो वाच्यः। स एव नस्थानिनोऽभावात्। अचोपि-
न। अन.न्तरतमत्वात्। यद्यपि तेषां तत्वेयतो नावइतिज्ञापकत्वसम्भवति तथापीयं वाचनिकावश्यकीति भावः॥
विरोधादिति। तथा च पूर्वत्र धर्म्मिपरयोरपि इह लक्षणया धर्मपरतेति भावः। इतरेतरद्वन्द्वेपि वर्त्तिपदार्थयोः प्रका- रामः
रत्वेनद्धर्मयोरपि प्रकारत्वेनेति तत्समूहे भावप्रत्ययेन मूले उदात्तानुदात्तत्वे इत्यस्योपपत्तिः। अर्द्धे ह्रस्वशब्दोर्द्धमात्रा। १२

पां रूढ इति भाष्यतो विशिष्टरूढेरेवलाभादाह। ह्रस्वपदस्येति। मूले बहुव्रीहिरिति भावः॥ स्वशास्त्रेति। रूप्यत इति रूपो
र्थः स्वशास्त्रसंकेतितां मात्राकालिकाजू रूपोर्थो यस्मिन्मात्राकालिकाज रूपेर्थे तेनाबोधकत्वस्याबोधकमितिया
वत्। कर्मणो हेतुत्वविवक्षया पात्. तीये त्यन्ये॥ केचित्तु तादृशभाष्यानुपालम्भात् प्रमाणमे वहृस्वस्याद्यवितिहष्पुकेष्वा।
मूले तत्पुरुषेपि न बाधकम्। वस्तुतस्तस्य प्रमेयपरत्वेपि जानुदघ्नमितिवन्मात्रचिन्तस्य लु किंदीर्घस्वरितादिसंग्रहे भा
ष्यप्रयोजनेन च केयटादीनां रूढिस्वीकारोनुचित इत्याहुः। इति समास इति। इदं वृत्तिकाराद्यनुरोधेन। भाष्ये तु कर्णेरु
द्रकुक्कुटाण्डवद्बहुव्रीहिश्च समासद्वयमुक्तम्। बहुव्रीहितत्पुरुषो लघुरित्यभिप्रायो मूलस्येत्याहुः॥ उदात्तस्वरितयो
रिति॥ यद्यप्यस्यानुदात्तत्वं ग्रामादित्वात् भवति। एवंच्चोदात्तानुदात्तेति स्वरितेतस्थानिकत्वाद्यण उदात्तस्वरितयोरि
त्यकारस्य स्वरितत्वेपि स्वरविधौ व्यंजनस्याविद्यमानवत्त्वेनोदात्तेति स्वरितत्वेपि वा तस्यासिद्धत्वेन शेषनिघातात्प्रवृत्त्या
स्वरितो वेत्यस्याप्राप्त्या पूर्वस्वरितासिद्धिरत्रपक्षे तथाप्युञ्छादित्वादनोदात्तत्वमेव हि शब्दस्य तथा च यण उदात्त।
स्थानिकत्वात्तस्य स्वरितत्वे स्वरितो वेति प्रवृत्तेष्टसिद्धिः॥ ह्रस्वत्वादीनामिति। स्वसमानाधिकरणोदात्तत्वापेक्षये

स.म. त्यर्थः।कृत्वादीनांदीर्घत्वादिसमानाधिकरणोपादानत्वाद्यपेक्षयेत्यर्थः।अतएवाष्टादशधाभिन्नामवर्णस्यप्रतिपत्तिं
१३ वक्ष्यामीतिपक्षस्थाप्यास्थानिमभाष्यंसंगच्छते।अकारघटितइति।सएवेत्यर्थः।तत्सत्वेनतद्घटितमपिप्रयुंजीत.यथा
श्रुतनुनसङ्गतंकिञ्चाल्वृतिल्वेत्यस्यप्रत्याख्यानमपितदभावएवसंगच्छते।अन्यथालकारदीर्घस्पृष्टमपेक्ष्यल
कारत्वेनोविवृत्तस्यान्तरतमत्वात्सएवस्यादितितदसङ्गतिस्स्पष्टैव।तुल्यास्येति।तुल्याविति।अतएवप्रत्येकसाम्यमास्य
यत्नसंज्ञा।अकःसवर्णइत्यादौसवर्णग्रहणाच्च।ननुवर्णोपयोगित्वेनहेतुनाताल्वादेर्व्यापृतत्वावपिप्रयत्नस्यतत्वेनाव्या
वर्त्तनादेवेत्यसङ्गतमतआह।पृथगुपेति।शब्दानित्यइतिनये।ऽस्यैवसम्भवादाह।जनकेति।अन्येतु।ननुयत्नप्रयत्न
शब्दयोर्यत्नमात्रेरूढत्वात्पर्यायत्वेनलाघवाद्यत्नेतिवाच्ये।प्रोपादानमधिकसंग्रहार्थमित्यस्यवक्तुमशक्यत्वेन
रूढियोगेतिन्यायेनयत्नसामान्यग्रहणमेवस्यादतआह।।जनकेतीति।तथाचप्रयत्नेजनकत्वग्रहेयत्नसामान्य रामः
स्यजन्यप्राणवर्णसम्बन्ध तकत्वबाधात्पोगार्थएवाश्रीयतेभूमौपंकजमुत्पन्नमितितथेत्याहुः।।निर्देशेति।इ १३
दञ्चविवृतत्वव्याख्यानांसंज्ञानुपपन्नत्वमितिसूत्रेरीत्योक्तम्।सप्तप्रयत्ना।इतिभाष्यरीत्याप्याह।अतएवेचोरिति।

एकारैकारयोर्मिथइत्यर्थः। कण्ठ दीनामेवेति। वायुसंयोगादीनामेवेतुनेतुनन्तह्यानासाप्रादयइत्यादिनिर्देशात्।
अन्येतुप्रयत्नसमभिव्याहारादसम्भवमपिकरणमेव। तत्वञ्चकण्ठादेरेवनसंयोगस्यव्यापारवत्त्वरूपकरणत्वाभा
वात्। कण्ठादेस्तुसंयोगएवसइत्याहुः। एतेनसंयोगव्युदासायज्ञापकान्तरस्यतत्वाप्यावश्यकत्वेनदकृत्वैवतेनतद्भि
न्नानांयावतामासम्भवानाग्रहणबोधनेनेष्टसिद्धौप्रयत्नग्रहणंव्यर्थमेवेत्यपास्तम्। तत्रैवदोषादिति। केचित्त्वासश
ब्देनासम्भवत्वव्याप्यजातिविशेषवद्यावत्तोत्वंविवक्षितमितिसाहचर्याद्यत्नशब्देनापियत्नत्वव्याप्यजातिविशेषव
द्यावत्तोत्वविवक्षणेवादोषार्थेप्रोपादानमित्याहुः। नन्वनेनापूर्वकादीनांकंठस्थानत्वेतुल्यस्थानत्वात्सवर्णपदशक्ति।
ग्रहेकुशब्दस्यतद्ग्राहकत्वमणुदित्सूत्रेणबोधनीयमितिकथमत्रवाक्येकुशब्देनपञ्चानामुपस्थितिस्तत्राह। तदिति
साहचर्यात्. उपक्रान्ताकारसमभिव्याहारात्। यथाश्रुतन्तुनयुक्तमितिस्पष्टमेवाध्यायेन। उच्चार्येत। अतएवानासि
कायास्थानत्वादेव। संयोगाधारेति। वर्णाभिव्यक्त्यवच्छेदकत्वावच्छिन्नतादृशसंयोगाधारतापाल्वाकारादेवस्तान्न।
संयोगस्योभयनिष्ठत्वेपिवर्णजनकपायोस्थानत्वव्यवहारातिप्रसङ्गः॥रूपसादृश्येनेति। एतदर्थमेवपूर्ववाह्यलक्ष

स॰ भ॰ णे मध्यमविशेषणद्वयम्. अन्यथा स्वरूपभेदायाद्यस्य वाह्यत्वायान्यस्यावश्यकत्वेपि तद्वैकल्यं स्पष्टमेव। अत एव
१४ ङादीनां स्थानत्वादेवा अन्यथा स्थानितीत्यस्या सङ्गतिस्स्पष्टैव। वाह्यप्रयत्ना स्त्वेति। अन्यथाऽऽस्यग्रहणव्यावर्त्या
नां सावर्ण्यानुपयुक्तानां प्रदर्शनप्रक्रमेण तत्कथनवैयर्थ्यापत्तिः। आस्यग्रहणबोधनेति। नासिकायाआस्यपदेन ग्र
हे तु तत्रत्यप्रयत्नस्यास्यपदव्यावर्त्तकत्वोक्तिरसङ्ग. तास्यान्तत्रत्यप्रयत्नाग्रहस्तु आधिगुणइत्युक्तगुणानामभे
दकत्वेतिवक्ष्यमाणरीत्यावोध्यः। इदं च नासिकास्यान्तर्गतेतिम तेमणिमन्त्रादिन्यायेन तद्ग्रहे प्रतिबन्धकत्वं
भाष्यस्योक्तम्। वस्तुतस्सा तद्वाह्यैवेति निरूपितं विस्तराद्ग्रन्थेनैतत्तत एव वोध्यन्तदाहावेदनामिति। वहुवचनेनासै
वभाष्यसम्मतत्वं ध्वनयति। भिन्नस्थानेति। प्रयत्नात्पृथक्‌त्वा — स्यपदेन कथनेनेत्यर्थः। एतेन भिन्नस्थानका
थनस्यान्तरतपपरिच्छेपयोगित्वादनुभवसिद्धानुवादरूपत्वाच्च कलादिदोषज्ञानोपयोगित्वाच्चेदमसदित्यपा राम:
स्तम्। ऐ च स्स्वेसेति। ए च इति त्वपपाठः। हसे हसन इत्यादावनुनासिकत्वप्रतिज्ञानात्। यत्तु परिनिष्ठितइति। १४
शेषं कृत्वा हसे इत्यादौ प्रक्रियायातस्सत्वेपि तच्छ्रुतिस्त्विह तत एवादर्शनादित्युक्तन्तन्नसत्वादितितत्त्वसम्यक्कूह

सूहसनइत्यादीनामपरिनिष्ठितत्वस्यैव ऋमशक्यत्वेनभुङ्क्तेपीतिन्यायावतारात्। ऋस्यऌकारस्यापिग्रहणादावे
वसम्भवेनप्लुतेमुत्तरग्रन्थासामंजस्याच्च। अत्रपाठेसर्वस्येत्युक्तिस्तुप्रयोगभेदाभिप्राया। ऌकारस्यचेति। चेनदीर्घ
प्लुतयोर्ॠकारयोस्संग्रहः। सपृक्तेदंस्थानेनतरतमसूत्रेउद्योते। सेयंसिद्धस्यगतिरेवश्रद्धालुभिरादर्तव्या। तत्वन्तु
ग्रेथकृद्दद्। अनुवादेति। एवञ्चात्रनन्वप्रवृत्तावप्यनुभवेनस्थानैकमादायसमकालयोरपिसंज्ञास्यादेवेतिवैक-
ल्यादप्रवृत्तिः। अपूर्वबोधकत्वेतत्वस्यसंकोचेनप्रतिहतिरेवफलंस्यादितिभावः। एतेनवृद्धिर्यस्याऽऽकुहेत्यादाव
नुवादेपितत्प्रवृत्त्यङ्गीकारात्तिव्रत्नमित्यपास्तम्। तेभ्योपिविवृतावेङावित्यादिवाक्यान्तरेणएचांविवृततरत्वाद्गुण-
केरन्याचामीषद्विवृतत्वसमानाधिकरणेषत्स्पृष्टत्वभ्रमस्यप्रसक्तस्यनिषेधमुखेनपूर्ववाक्यविहितविवृत
त्वबोधएवतात्पर्यादाह। रूपविवृतत्वेति। अपूर्वबोधनेहिस्वराणांविवृतमित्यनेनपौनरुक्त्यंस्यादित्याहुः। य
णस्त्वीति। वाक्येस्पष्टाऽरत्नस्यसंवन्धात्तेषामीषद्विवृतत्वंशाब्दंस्पर्शापेक्षयेषत्स्पृष्टत्वमार्थसमाजप्रसक्तंतस्य
र्वमाह। इत्यनेनेत्यादिना। शलामीषदिति। ईषत्वमजपेक्षया। अत्रेति तेषांभेदेनकथनेसतीत्यर्थः। एवञ्चस

स॰भ॰ वर्णस्य हेतुत्वं फलितम्। अग्रे। प्रयत्नभेदादक्षरसमाम्नायस्याकारेणाग्रहणाद्वा मा वान्तदीर्घः अत एव गुणो
१५ पि नेति भावः। समासस्तु दीर्घश्चाश्च तयोरभाव इति। प्रयत्नभेदस्या दीर्घयोरभाव इति वा। प्रयोज्यत्वं षष्ठ्यर्थः। सि
द्धान्तभूतजातिनिर्देशे संवृतत्वावर्णस्यान्ते संहितायां विवक्षयाऽगुणो नेति। दीर्घस्त्व गृह्णयविरहान्न। एकसूत्रे संहि
तानियमं न दृष्टेऽपलुगिव सुपां सुलुगिति ङसस्सुरेव तस्य रूपत्वयत्वलोपाः। न दसिद्धत्वान्न गुणादि। उत्वं तु नातीति विवृतनि
र्देशादिति बोध्यम्॥ पूर्वत्राघत्वेत्यादि। अयम्भावः। गोदुहम् इति स्थिते पदान्ते घत्वस्य जश्त्वापवादत्वात्तत्र प्राक्।
घत्वम्। औपदेशिकभषन्तेभुदादेर्युगपत्प्रवृत्त्यानन्तरङ्ग जश्त्वमपवादस्य चरितार्थत्वात्। भष्त्वात्पूर्वमिङ्ङिःशी
नामिति न्यायेन धातूपसर्गयोः कार्यस्यैव पूर्वोत्पन्ननिमित्तकत्वेनान्तरङ्गत्वाज्जश्त्वम्। अनुनासिकात्वपरा।
निमित्तत्वेनान्तरङ्गत्वात्सिद्धान्ते तु जश्त्वासिद्धत्वात् घत्वे जश्त्वानुनासिकयोरसिद्धत्वात् भष्भावेऽनुनासिकस्या
सिद्धत्वाज्जश्त्वे नुनासिक इति प्रक्रिया। घादेरसिद्धत्वस्य प्राप्तिरेवेति। घत्वेः कृत इतिः। उक्तरीत्या वत्वेति। ज राम: 
श्त्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वेऽप्यनुनासिकस्य परत्वेऽपि वत्वस्याककुद्मान्तडित्वानित्यत्वमत्वाद प्राप्ति १५

योऽप्यचरितार्थ्येन चेदनुनासिकाभावपक्षे चरितेनापवादत्वाभावेऽपि प्रतिपदोक्तत्वादनुनासिकतोपरनिमित्तकत्वे ना
न्तरङ्गत्वाच्चोभाभ्यां पूर्ववत्त्वप्रवृत्तिरिति भावः। प्रत्याहाराग्रहणसामर्थ्यादित्यन्ये। उक्ताशयानभिज्ञस्तुल्यबलत्वं जाना
नः शङ्कते। न चेति। चरितार्थ्येन्तू क्तमेव। पक्षानुरूपेति न्यायेन समाधत्ते। विप्रेति। अन्यथेति कार्यकालपक्षे त्रिपाद्यां
विप्रतिषेधसूत्रोपस्थितौ विप्रतिषेधरूपनिमित्तनाशकपूर्वत्रेत्यनेन विप्रतिषेधसूत्रस्य बाध उत नासिद्धत्वनिरू
पकपूर्वस्यासिद्धिसम्पादनद्वारा विप्रतिषेधसूत्रस्य न प्रतिबन्धकत्वमित्यत्र विनिगमनाविरहापत्तिरिति भावः
॥ एतेनाधिकारत्वे यथोद्देशत्वे विधित्वे सपादत्रिपाद्योर्विप्रतिषेधाभावानुवादेन वार्त्तिकसामञ्जस्ये नेदम
सङ्गतमित्यपास्तम्। अत एव। तस्यायथोद्देशत्वादेवात्वमेति। वत्वभष्भावानापत्त्यभयापादनेनत्वरुचित्वयापि।
नयं स्यादिति भावः। दित्तमिति। अन्यथापक्षद्वयसाधारण्येन नदनापत्तिरेवापादितास्यात्। पत्रानुवृत्तिरिति।
एवं वाधिकारत्वे त्रिपाद्यामवीत्यादि फलितमिति भावः। स्वदेशे वाक्यार्थबोधे फलाभावेऽपि पदार्थोपस्थितौ प्रति
वेधकाभावे ननत्त्वमत्वादाहासपादेति। आदिभिरिति। आदिपदे बहुवचनोपपत्तिस्तु नमुदादेशइत्यस्यनलो।

स·भ पेतिनियमस्यास्यचनिषेधसत्वान्निर्वाह्या। परत्वादिति। युगन्दान्तरप्राप्त्योरुभयोरप्यनित्यत्वात्। अन्तर्गतथावन्नि
१६ मित्तकत्वेनापरनिमित्तकत्वेनोभयोरप्यन्तरङ्गत्वात्। अनङिति। अनङितिसत्वेनोभयोरपिप्रतिपदोक्तत्वात्पर
त्वेनैवव्यवस्थेतिभावः। ननुशास्त्रासिद्धत्वेप्यनित्यत्वे नतन्न्यायाप्रवृत्तिरवश्यंवाच्याऽन्यथापिपठीरित्यत्रपूर्वो।
प्रवृत्तिकत्वेनषत्वेशास्त्रेऽसिद्धत्वेप्युक्तन्यायेनसकारबुद्धेरभावादुत्वंनस्यादितिकार्यासिद्धत्वेपिनदोषइत्यत।
आह। शास्त्रेति। ननिवृत्तीति। स्थानिनिवृत्तीत्यर्थः एवंचसकारनिवृत्तिबुद्धेरभावेनतत्सत्वात्तस्यादेवेत्तिनदोषः
नवतुप्रवृत्त्यनन्तरमसिद्धत्वान्निवृत्तिबुद्धेःसत्वेननस्यादितिभावः। पूर्वत्रनेति। अत्रन्यासेनिषेधानांबलीयस्त्वे
नप्रकल्प्यतिन्यायेनचानन्तरङ्गस्यपूर्वमप्रवृत्तिरेवेतिबोध्यम्। नन्वेवन्तदकरणाल्लाघवमेवेतितन्नेष्टापत्तिरेवात
आह। राजभ्यामिति· दिगिति· तेनकिमुक्तमित्यादावनुस्वारादौकर्त्तव्येवत्वादेर्निषेधइत्यस्यसंग्रहः। वाक्य
भेदेति· नन्वस्तुपदैकवाक्यतातावतापिनमुनइतिसूत्रेधिकारसिद्धपदसंबंधेमुअअसिद्धस्त्रेत्यन्वयात्सुभावा। रामः १६
निष्ठासिद्धत्वस्यैवानेननिषेधः। नमुभावस्यैतिचेन्न। पदैकवाक्यतापक्षेऽदसोसेरित्यत्रोपस्थितानावसिद्धपदस्य:

नापदार्थोपस्थित्यभावे नवोधाजनत्वेनाकरणीयत्वमित्यर्थः। नचानुपदेशमात्रेण सत्वशंकायामकारादीनामपिस्या
त्सेतिवाच्यम्। अक्षरसमाम्नाये जातिनिर्देशसत्वेनात्वादिजातेरकारादिषुसत्वात् लृकारेत्वजातेरभावादितिव
दन्ति॥ सयंयंतेत्यादाविति। आदिनाकुक्कुटादिपरिग्रहः। द्विर्व्यंजनेति। मात्रादिरयंसच कुक्कुटादौसंयोगगुरुसंज्ञाप्लुता
दिरूपः। सयँयंतेत्यादौ चानचीतिद्वित्वरूपः। नसचद्विर्व्यंजनाश्रयत्वमप्रकृतलक्ष्याभिप्रायम्। हलोनन्तराः इतिसूत्रोपन्या
सस्त्वादिपदग्राह्यकुक्कुटाद्यनुरोधादितिबोध्यम्॥ एतेनपरसवर्णस्यासिद्धत्वादनन्तरंहलमादायसंयोगसंज्ञाद्विसंस्पृष्टी
तीदमसंगतमित्यपास्तमित्यपिवदन्ति। वस्तुअनुपदिष्टत्वादित्यस्यशिष्टैरितिशेषः। ननुमहेश्वरेणेतितथासत्ययोग
वाह्यानामद्गुणत्वमितिअतिक्रमेत्यादेः कर्तुमशक्यत्वस्यब्राह्मणापिदुर्वारत्वात्। वृत्तिसमवायार्थउपदेशत्वका
रोपदेशेपदच्छेद्य इत्यादिकंचोपलक्षणंतांविनाजसेननोपपद्येत। किंच। अकारादिसत्व स्यजातिनिर्देशेनो।
पपादनेमात्रिकव्यंजनादेरसत्वमुपपादयितुमशक्यत्वमितिचिन्त्यमेवेदमित्याहुः॥ तदपरेनक्षमन्ते। चतुर्दश
सूत्रीनिर्दिष्टजात्याक्रान्तस्यासत्वनिवर्तकत्वेमात्रिकाईमात्रिकव्यंजनसाधारण्यत्वादिजातेस्तत्रनिर्दिष्टत्वे

स॰भ॰ कयत्नोत्पत्तिर्युगपद्गुणिनेत्येवकस्मैकस्यैव प्रयत्नस्याग्न्याघातहत्वादिस्पर्शादिजनकत्वमिति स्पष्टमेवायातमिति तदे
१७ तत्सकलं मनसि निधायाशंकते । यद्यपीति । ——— अयोगवाहनिरासायाह । शषसेति । अत एव विसर्गादेः पृथक्
ग्रहणम् । अत एवानुस्वारस्य श्वासादयो न । अनुप्रदानं वाह्येति । उद्योते तु श्वासो नुप्रदीयते यैरित्यर्थ इत्युक्तम् । रूढौ मानन्तु
तुल्यादिसूत्रस्य भाष्यमेव । यद्यपीति । खर्शादिष्वघोषाद्यन्यतमेति पाठः एवं हशादिष्वपि बोध्यम् । खयादिषु घोषाघोषान्य
तरेति पाठे खयादिष्वित्यत्रादिना हशादिपरिग्रहः । शास्त्रानुरोधेन तथा हुन्नुप्रयोगोपि यथासंभवं योगो न यथासंख्येन
वर्गेष्वेवयमानां स्थितिरित्यर्थे क्रमवारणाय पञ्चस्वेत्युक्तौ चिन्त्यासदृशमुपपत्तये चाह । विद्येति । नन्वेवमपि प्रयोगे युगपच्चतुर्णां
स्थित्यभावेन लक्ष्यविरोध एवात आह । निर्देति । अन्यतमादिति । एतेन परशब्दप्रयोगे चतुर्भ्य इति पंचम्युक्तिनेत्यपास्त
म् । निर्देशासंगतिरिति । यद्यपि यावत्स्थानसाम्यमिव यावत्प्रयत्नसाम्यविवक्षामन्तरेणापि निर्देशसङ्गतिस्तथापि याव सभः
त्प्रयत्नसाम्यस्यानंगीकारे खकारस्योष्मत्वादिदानींविवृतत्वापत्त्या वनेकसावर्ण्यस्यादुर्वारत्वेन तदर्थमिदानीं यावद् १७
प्रयत्नसाम्यविवक्षणस्यागलेपातात् ॥ अकारवर्णयोः ॥ एतदर्थमेव । एतद्बोधार्थमेव । अशक्यत्वमिति । तदभाववादि

धानमित्यर्थः। इतिनशंकाकलंकलेशः। व्यावृत्यर्थमिति। अत्ववति चेदत्वेवेति नियमद्वारेति भावः। नपरकरणेन।
दीर्घवट्टकारेपि व्यावृत्यर्थमिति। अत्ववतिचेदत्वेवेति नियमद्वारेतिभावः नपरकरणेनदीर्घवट्टकारेपिव्यावृत्यात।
अनेनसिद्धिःसावर्ण्येनस्यादिति। परवल्लिंगमितिनपुंसकत्वापत्तिश्चबोध्या। अतएवाग्रेति। प्रश्लेषादेवेत्यर्थः। ए।
वंदोषसंभवेनपदद्वैपर्य्यन्तधावनंव्यर्थमितिसूचयितुमाह। उपलक्षणेति। भावप्रत्ययान्तसंज्ञाशब्दस्यशब्दपरत्वा
दनन्वयोतआह। बोध्येति। इदंशकारादिसंग्राहकस्यहकारादीत्यादिपदस्योपादानंजातिपक्षेतुजातेर्भेदाच्छंकै।
वनेतिभावः। अणुदित्। ज्ञापयतीति। गतिकारकेतिवद्बोधयतीत्यर्थः। अतोनसार्थक्यप्रश्नावसरः। ननुवार्त्तिक।
स्योपदेशनइतिवदज्ञानेनप्रवृत्तिरत आह। भाष्येति। ननुभाष्यमपियोगरूढ्यापरिभाषार्थंबोधयतीत्यर्थकमत
आह। ज्यादेति। एवञ्चशब्दार्थसंबन्धनिश्चयसत्त्वेपिअनुभवसिद्धत्वेनतदनुकृत्यानस्यतदर्थकत्वमप्रामाणिक
मितिभावः। एतेनेति। आवश्यकपरिभाषयापटवदित्यादिसिद्धौज्ञा–पनेफलाभावेत्यर्थः। सुलभत्वादिति। अत्र
पक्षेकुकूदुकुनुमनुकूघुडादीनदोषः। उकारमात्रेदितिव्याख्यानात्परेश्च घांकेत्यादाविव स्वरूपपरत्वेवा॥ स।

नानुपदेशान्मात्रिकव्यंजनासत्वप्रतिपादके ओ॒ऊ॒ सूत्रस्थभाष्यविरोधात्तस्माच्छिष्टोपदेश एवासत्वशंकानिवर्तक
इत्येवं भाष्याकूतम् किंच्चानुवादेपि संदेहनिवर्तकइति प्रागुक्तत्वेन तस्य चत्कारे वह्वृचाः प्रदर्शनेन चिन्त्यमेव पो-
ष्यमायानि। अन्येतु वस्तुत एवमानुपूर्वीका श्रुतिरेवेयमिति नानर्थकं शंकेति समर्थयाञ्चक्रुः॥ तदाकूतं किमिति तुच्छं
कापितमेव। अत एव तदुपदेशप्रयोजनगणनावसरे सतन्त्रोक्तभाष्यकैयटयोः॥ नाज्झलौ॥ मते इति। तालव्याभवे-
कारश्चवर्गो विकारैकारौ एकारश्शकारः पृष्ठे श ष औष्ठ्यौ पपाघ इति वह्वृचप्रातिशाख्यमत इत्यर्थः। शकारादीनामिति।
आदिना वह्वृचनाभ्यामेकार एकार ओकारोपध्मानीयादिसंग्रहः॥ सूत्रमते विवृततत्वाभ्यां नांसंज्ञानुपपत्तिरुक्तत्व
स्योक्तत्वात्तयोर्विवृततरत्वादिनाभेदेपि तत्प्राप्तिर्वोध्या। अत्र मते यजुष्के षामित्यादि निर्देशादैऔजित्यारंभाद्वा
मिवकारयोरास्यानसाम्येपि संज्ञा न। स्वरानुस्वारोष्मणामस्पृष्टमिति तत्रैव प्रातिशाख्ये प्रयत्नैकस्योक्तत्वेन च संज्ञा
प्राप्तिर्वोध्या। अत्र वदन्ति। एवमपि नाच्शलाविति तु न सूत्रितं हलां परस्परं संज्ञानिषेधापत्तेः। यथाश्रुतन्यासेतु पूर्व
सवर्णकरणानेति· हशि चेत्येव सिद्धइति। एतद्वत्तराशस्य पाठकग्रन्थोऽनीति वचनमित्यस्यानुवर्त्यं योगविभागेन वि

धानमित्यर्थः। इतिनशंकाकलंकलेशः। ग्याहृत्यर्थमिति। अत्वव तिचेदत्वेवेतिनियमद्वारेति भावः। नपरकरणेन।
दीर्घवद्धकारेपिमाहृत्यर्थमिति। अत्ववतिचेदत्वेवेति नियमद्वारेतिभावः। नपरकरणेनदीर्घवद्धकारेपिमाहृत्यात।
आनेनसिद्धिःसावर्ण्येनस्यादिति। परवल्लिङ्गमितिनपुंसकत्वापत्तिश्चबोध्या। अतएवाग्रेतिप्रथमेत्यादेवेत्यर्थः ए।
वंदोषसंभवेनपदद्वैपर्य्यन्तधावनंव्यर्थमितिसूचयितुमाह। उपलक्षणेति। भावप्रत्ययान्तसंज्ञाशब्दस्यशब्दपरत्वा
दनन्वयेनआह। वोध्येति। इदंशकारादिसंयाहकस्यहकारादीत्यादिपदस्योपादानंजातिपक्षेतुजातेर्भेदाच्छंकै।
वेतिभावः। अणुदितांज्ञापयतीति। गतिकारकेतिवद्बोधयतीत्यर्थः। अतोनसार्थक्यप्रश्नावसरः। ननुवार्त्तिक।
स्योपदेशनइतिवदज्ञानेनप्रवृत्तिरत आह। भाष्येति। ननुभाष्यमपियोगरूढापरिभाषार्थंबोधयतीत्यर्थकमत
आह। ज्यादेति। एवञ्चशब्दार्थसंबन्धनिश्चयस्यअपिअनुभवसिद्धत्वेनदनुक्त्यानस्पतदर्थकत्वमप्रामाणिक
मितिभावः। एतेनेति। आवश्यकपरिभाषयापटवदित्यादिसिद्धेर्ज्ञापनेफलाभावेत्यर्थः। सुलभत्वादिति। अत्र
पक्षेकुकूटकुनुमनुकूघुडादौनदोषः। उकारमात्रेदितिव्याख्यानात्परेऽश्वघांकेत्यादाविवस्वरूपपरत्वेवा॥ स।

स·भ· णिनद्धनि· सवर्णीशब्दोऽन्यधर्मेपरः।चादिन्वेति।इत्थादाविवन व्यमतेऽनुवादेऽपीत्संज्ञालोपप्रवृत्तोऽप्रतिबन्धकाभा
१८ वोकारविनिर्मुक्तस्यैव चादेरूपस्थि[illegible]न्यायसिद्धमित्यन्तोऽउकाररूपावयववर्णानां च शब्देन ग्राहकः।नविभेति निषे
धेन सोऽरूकारस्येत्वानापत्त्या गुणइत्यादिनिर्देशासङ्गतेः।ननु यथाश्रुत एव चः स्वरूपसमुच्चायक आस्तां किं भिन्नक्र
मत्वेनात आह।ह्रस्वेति देत्यादिरित्यादौ दीर्घोच्चार्थमारोपस्यावश्यकत्वादिति भावः।लृकारग्रहणेति· योत्वनुक्तं क
थयेकादोरत्वेतेति भाष्यग्रन्थेन सूत्रेष्वेव हितत्सर्वयत्नो यत्नं वार्त्तिक इति हरिग्रन्थेन च तयोस्सावर्ण्यस्य सूत्र
मतेऽपि सत्वात्।वार्त्तिकमतेऽपि पूर्वेणाणग्रहणपक्षे एकारादौ वाक्रतिनिर्देशप्राप्तसवर्णग्रहाभावायाप्रत्यय इत्या
श्वन्नियमावश्यकत्वेन सत्वादणाग्रहस्यतन्मतेऽप्यपं ग्रन्थो वोध्यः।लृवर्णस्य आवदितितु प्रत्याख्यानप्रकारेति।
प्रकृतेनावसरस्तस्येति सर्वमवदातम्।अन्येतु तपकरणात्पूर्वेणाणग्रहणं वाधपित्वा ग्रहणकशास्त्रप्रवृत्त्या रामः
ष्टादशानां ग्रहणं प्राप्य न परसूत्रप्रवृत्त्यातद्बाधकल्पनया चारितार्थ्यकल्पनापेक्षया अ·लृवर्णयोस्सावर्ण्यं वोध १८
नद्वारा तत्प्रवृत्त्या तद्ग्रहेण साफल्यकल्पनाया एव लघुत्वादिति भावः· अत एव युक्तमित्येवोक्तन्तु चिन्त्यमपास्त।

न्तन्नेत्याद्रीत्याहुः। समानजातित्वस्यैवेति। समानोवर्णोजातिरित्यर्थः। स्वार्थेष्यञ्। वर्णाश्रमाचारवानित्यादौव
र्णपदेनजातेर्व्यवहारादितिभावः। होत्तृकारदीर्घस्तु अको कीतिन्यायेनसुवचः। अत्रैवपक्षेशाकलप्रतिबन्ध
स्तुनफलम्। अत्पक इत्यस्याप्रवृत्तेः। इदन्त्व अष्णुन्यनुरोधेनगौरवमनुसन्धेयम्। लाघवादेतु ऋलृवर्णसा
ऋवदितिशब्दरत्नोक्तमनुसंधेयम्। एतद्व्यतिरिक्तेति। अकारादावचीत्यर्थः। अ त्वेनसादृश्यादनकारादौभिन्न
जातीयेसत्यपिसावर्ण्येनदोषः। योगविभागेनेति। भाष्यमाष्यमानेतिपरिभाषाबोधनद्वारेतिभावः। अस्यावश्यक
तांध्वनयितुंव्यक्तिपक्षइव जातिपक्षेपिफलान्तरंवक्तुमुक्तमपिदार्ढ्यायसफलमाह। एवंगुणाइति। ननुसू
त्रसत्वेजातिपक्षेजातीनांस्वतुष्ट्वाद्व्यक्तिपक्षेशकार्थमादाययथासंख्यमिष्टं सिध्यति। तदभावेकथमत आह
एचोयवेति। नन्वेवमपिनस्वाभ्यामित्यादावेङितिपाठविधेपत्वात्तयोरग्रहणएओश्च विधानेपि अनिष्टंस्या
दत्त आह। नप्वेति। नन्वेवमानुपूर्वीकाश्रुतिरेवान्यार्थमितितद्वैयर्थ्यमत आह। अत्रैतदिति। ननुसमुदाय
मध्येनिषेधस्याप्रवेशात्कथंतेनतत्रैतदग्रहणमत आह। अपम्भावइति। अच्यदंविहायाणित्युक्तिसाफ

णानुवृत्तिसामर्थ्यात्तद्धा धइति प्रकृतसूत्रस्थप्रदीपोक्तं तु न युक्तम् इकारानुवृत्त्यास्वरितत्वसार्थक्यादुकारे पृथक् स्वरित
त्वेमानाभावात् ह्रस्वो रित्येववक्तव्ये कृत्वोर्थग्रहणसामर्थ्यात्तद्धा धइत्यपि न इति पूर्वोपादानफलस्य प्रागुक्तत्वात्तूत
त्करणे तु विपरीतगौरवापत्तेः कृत्वसामर्थ्यमिति दूषितमेवेति दूषितप्रायमित्यर्थः सूत्रेचेति चोऽस्त्येयोऽन्यः किंच पूर्वत्रे
ति। सिद्धं त्वेतु वृद्धिरादैजित्यारभ्यसावधिकः स्वाव्यवहितश्च समूहः पूर्वशब्दार्थः स्वव्यवहितपूर्वग्रहणे तु ततः परत्वस्य
सपादसप्ताध्याय्यामपिसत्त्वेन तत्राप्यसिद्धत्वापत्तेः तस्मात्परग्रहणे तु त्रिपाद्याम् अनंतरं पूर्वं प्रति अंतरं नासिद्धं स्या
त् समूहदृष्ट्याऽसिद्धत्वे फलाभावात् प्रतियोगं पर्यवसानात्तदित्ति भावः॥ इत्त एवारुचेराह॥ किं चास्येति सपादसप्ता
ध्याय्यामिति सपादेत्यादिः। प्रतिसूत्रमिति अत एवाऽधिकारः पुनः प्रतिसूत्रं निर्देशार्थ इति योगे योग उपतिष्ठत इति भाष्य
म्॥ इसुसोरिति। सख्युरिति लाक्षणिकत्वेनास्य व्यावृत्तिर्बोध्या कविभिरिति। अव्युत्पत्तिपक्षेऽर्थवानि सु असंभवीति भावः
साहचर्यादिति उत्तरसूत्रविषये समासरूपप्रातिपदिकावयवयोरेवेसुसोः संभवेनेहापि तथाभूतयोरेव ग्रहणं तथाभूत
योः सुप्तिङ्भिन्नयोरेव संभव इत्येतत्साहचर्यादुत्तरसूत्रेपि सुप्तिङ्भिन्नयोरेव ग्रहणमिति ओजोभिः कृतं सख्युः पाक
इत्यादावस्तु किंच कुःपेचुरिति सत्तत्वं यत्राभिधीयते सा च कुःपेचुरित्यादौ चनोत्तरसूत्रप्रवृत्तिरिति बोध्यम् तिङ्भिन्नेसा

सं॰भ॰ ६९ हचर्यात्तु सतिद्वे भिन्नस्तु वऽव यववभिन्नः प्रतिपदोक्तो साहचर्यादिं सपित्तथैवेतिभावः पदावयवेति फलितार्थकथनमि
दं वाच्यार्थस्तु द्वे सुसन्तविसर्गान्तं यत्पदं तत्पदं तस्याल्भादेशा इति तेनौजोभिः कृत्तं सर्पिष्करोतीत्यत्र पूर्वस्य न पूर्वोक्तरी-
त्या तस्यासत्वाच्च तयोर्व्यपेक्षाविरहाच्च अत्रे सुसोः प्रत्यययोरर्थवत्तो श्वग्रहणमिति केयटदीक्षितौ। अत एव पूर्वसूत्रसा
मयत्रविभाषात्वं सर्पिषायजुषा इत्यादौ षत्वाय सुसविषये व्युत्पत्तिपक्ष एवेति तदाकूतम् अत एवेयमप्राप्तविभाषे
ति तदनुरोधेनाह नचेति निष्कव्यव्यपेक्षायांमानाभावादाह उत्तरपदे इति तस्य कार्यित्वस्य वस्तुतः पदान्तविधित्वस्य च
सत्वात् उपात्तत्वं च तत्रोक्तानुवृत्त्यावेत्यभिप्रेत्याह उपात्तेति ज्ञापनेनेति नन्तु पूर्वं सर्पिः प्रिय इत्यादौ मध्यमपदत्वा-
क्रांते उत्तरपदे इति निषेधाप्रात्यादि संतस्य पदत्वेन निषेधश्चरितार्थ इति वाच्यम् समासेन पूर्वपदाध्याहारेण संतस्य पूर्व
पदत्वाभाव इति ज्ञापकपरभाष्यप्रामाण्यात् अध्याहारफलं तु परमं सर्पिः प्रियं यस्येति त्रिपदेऽप्रवृत्तिः। अन्ये तु अथचेत्स्त-
दंतमेतत्ततोऽधिके नैवमेव भवेत् प्राप्तिरिति भाष्यस्य परमसर्पिः कुण्डिकेत्युपक्रम्य प्रवृत्तस्य तथा वाक्येऽपि तर्हि रामः
नप्राप्नोति परमसर्पिः करोतीति भाष्यस्य चेसन्ते एकार्थीभावव्यपेक्षयोरभावे इत्येवाशयः न तूत्तरपदे इति निषेधेन ६९
संतस्य पदत्वाभाव इति मध्यमपदत्वाक्रान्तत्वेन युक्तात्परत्रसत्वेन च तन्निषेधाप्रवृत्तेरित्याहुः॥ तदंतार्थके सेति॥ इ

सुसित्यस्येत्यर्थः॥ धातुसहचरितेति इदं समर्थसूत्रके यदानुरोधेन सुक्रमोरिति सूत्रस्य भाष्यरीत्या तिङां कर्मादिद्योतकत्वे
तु यथाश्रुतमेव सम्यक् इति तत्रैवोद्द्योते स्पष्टम् नेति इदं फलितार्थप्रदर्शनं पर्युदासस्यन्याय्यत्वेन धात्वभिहितभिन्नमः
समर्थवदित्यर्थः। ननु समानाधिकरणं धात्वभिहितं समर्थवदित्येवास्तु समानाधिकरणं चेद्धात्वभिहितमेवेति नियमादिष्ट
सिद्धेरिति चेन्न धात्वभिहितं चेत्समानाधिकरणमेवेति विपरीतनियमापत्त्या सर्पिष्पाठकः पिवतीत्यादौ षत्वापत्तेः वक्तव्य इ
ति नवक्तव्यः अरतेरी यङिति ज्ञापकात् नधातुप्रत्ययानामादेश इति शेषः। अत एवाग्रे चः पठ्यते भाष्ये॥ नित्यग्रहणं त्विति
मासग्रहणं सूत्तरार्थमिति भावः ननु व्युत्पत्तिपक्षे अनुत्तरपदस्येति पर्युदासात् समासे लब्धे किमर्थं समासग्रहणमिति चेच्छृ
णु पर्युदासेन पदात्परपदस्यैवेत्यादेरपि वक्तुं शक्यत्वेनानय सर्पिः पठत्वयं परमसर्पिः कुण्डिकाइत्यादावेव स्यादित्ति भा
ष्य इति एवं च तिष्ठतु सर्पिष्पिवत्वमित्यादौ सर्पिष्कालकमित्यादौ च नित्यं षत्वं न्याय्यम्॥ भाष्ये सविसर्गपाठस्तु व्युत्पत्तिपक्षा
भिप्रायेणेति वोध्यम् व्याख्यानादिति तच्च नित्यं समास इति सूत्रे भाष्ये स्पष्टम् सिद्धेरिति भाव इति अयं भावः असमासे व्यपे
क्षाविरहेपि षत्वार्थ इति वक्तुः प्रत्यय संवन्धिभिन्नविसर्गस्य षत्वमित्येवार्थः संमतो व्युत्पत्तिपक्षश्च अन्यथा व्यपेक्षाविर
हेपि प्रत्ययभिन्नविसर्गस्येत्यर्थे इदुदुपधेति षत्वसिद्ध्यापत्ता अर्थ इत्यस्यासंगतेः॥ व्याख्यादर्शीरीत्याह व्यपेक्षायामिति ए

वेंचषत्वार्थइत्ययंग्रन्थःसिद्धान्तभूतःअयंत्वन्यदीयःएवंनायंसर्वग्रंथएकमतानुसारीतिभावः तथाचास्मिन्नपरमतेपिगणे
पाठोनित्यार्थःआवश्यकइति तत्सामर्थ्यादुत्तरपदस्यस्यापिघत्वमितिवक्तु रतिमंदत्वसूचनायाप्यर्थकपक्षःपठितःइदुदुप
धेतिसूत्रस्थमनोरमाग्रन्थस्तुव्याख्यादर्शानुसारेणेतिनतद्विरोधःएकमतानुसारेणसर्वोग्रन्थोयोज्यइत्याग्रहेतुइतएवास्य
चेत्यहव्यपेक्षायामि तीतियोज्यमित्याहविकल्पेति।तदऽभावेनित्यविधिस्तुनविकल्पविधीनांसतिसंभवेनवेतीत्यारम्भेणो
भयत्रविभाषात्वात् नचसिद्धत्वमाश्रयात् असिद्धत्वाद्विकल्पइत्यापाद्यमानग्रंथस्तुचिन्त्यएव यद्वासाहचर्येणविकल्प
विषयेऽप्राप्तत्वादितितदर्थः आक्षिप्तेति लक्ष्यानुरोधादऽध्याहृतेत्यर्थःपुनरुक्तोबीजमाह तपरेति॥ ॥इतिशेखरविवृ
तिसंग्रहेविसर्गसंधिः॥ ॥रूरेवेति॥रामइत्यादौसुपिचेतिदीर्घस्तुन अनाप्यकइत्यत्रेवापिचेतिन्यासात् नन्वेवंङ्याप्ःसो
रितिनिष्कर्षेहे पियचत्वइत्यत्रराज्ञस्येतिनियमात् संयोगांतलोपाप्राप्त्यारोरीतिलोपेढ्लोपइतिदीर्घापत्तिरितिचेन्न तस्य
निष्कर्षस्यदूषयिष्य माणत्वात् चारितार्थ्यादिति श्रद्धुत्ताद्वित्यस्यतुनसामर्थ्यं वात्तीबंधुरितिभाष्योपष्टंभेनाऽसंबुद्धावपि
स्तुनप्रवृत्तेरुक्तत्वेन श्रायातुभवान् देवदत्तोऽहंगच्छामीत्यादौचारितार्थ्यात् हलोऽनन्तराःसंयोगान्तलोपोरुत्वेइतिन्ना
पकान्नासिद्धत्वमितिचेदापीतिन्यासेनकिंचिल्लाघवमितिबोध्यम् सस्सजुषोरुरित्यत्रोकाराऽनुबंधस्तुयत्वविधावुभयग्रह-

पार्थइति तत्सामर्थ्यादऽसिद्धत्वं तेननवक्तुंयुक्तम् भाष्येस्पष्टमिति अत्रत्यं तत्त्वं परिभाषेंदुशेखरविवृत्तिसंग्रहेस्पष्टम्॥ज-
घ्नत्वेत्ति·वाध्यविशेषचिन्तायांयेननाप्राप्तिन्यायेनेत्तिभावः॥ वाध्यसामान्यचिन्तायांतु श्रेयानित्यादौ सुलोपं वाधित्वाहत्वे यणःप्र-
तिषेधारंभात्तत्फलीलोपाद्यासन्नस्यादित्तिभावः दिगित्युतत्या वाध्यसामान्यचिन्तायांभाष्योक्तपक्षांतराणांसंग्रहइतिवोध्यम्·
उत्वगुणयोरिति·ननुकृतेप्युत्वेतस्यस्थानिवत्वेनहत्वाद्यत्वंस्यादऽतआह गुणेति तत्रकृतेऽपूर्वत्वाभावात्तदऽप्राप्तिरित्तिभा-
वः व्याख्यानेत्ति· तच्चप्रकृतसूत्रभाष्यादिषुस्पष्टम् स्पष्टार्थमिति रूढिप्रयोजनयोरभावेनलक्षणयाप्रयोगस्यान्याय्य-
त्वादितिभावः प्रकृतसूत्रेउद्द्योतेस्पष्टमिदं अदीर्घत्वादिति यद्यपि बहुश्रेयसीनित्यादौदीर्घोपिसंभवति· तथापिदीर्घोच्चा-
रिचेत्पत्रदीर्घग्रहणाददीर्घस्याऽपिग्रहइष्टइत्तिभावः। इष्टसिद्धेरिति·गम्नित्यादिसत्यभिधानेसाजात्यातिदेशादिष्टसि-
द्धिरितिभावः॥ तावितिनिर्देशाद्देवदत्तेत्तिन्यायाऽनित्यत्वमितिकस्यचिदुक्तिंकटाक्षयति तावितितुनात्रेति तावित्यत्रेत्य-
र्थः सतितत्प्रवृत्तौतेनतदऽनित्यत्वज्ञापनसंभवेदपीत्तिभावः दत्तजीवनमिति इतिन्यायशरीरमित्यर्थः प्रकृतेइति ता-
वित्यत्रेत्यर्थः वाधकमितीति इतिहेतोः एवंस्वस्वविषयज्ञानेशास्त्रद्वयसंनिधौएकापनोदेपि एकस्यप्रवृत्तेर्निर्वाधत्वात्
भ्रष्टावसरन्यायस्याप्यऽयंनविषयइतितदऽनाश्रयणज्ञापकतापिकथमस्यनिर्देशस्येतिचिन्त्यमेतत् यौगिकार्थवाधा

स॰भ॰ दाह कस्यचिदिति अत्वसंज्ञस्येति दीर्घेतपरव्यावर्त्यत्वादाह संबुद्धाविति तत्सामर्थ्यादितीति प्रतिषेधोपादानसामर्थ्यात्सि
७१ द्धः प्लुत इति कैयटः विशेषणोपादानेन प्लुतविध्येकवाक्यतापन्नपूर्वत्रेति पूर्वप्रकृतेनोत्वविध्यग्रहणमिति ज्ञाप्यत इति
तत्तात्पर्यमिति तच्चिन्त्यं तथासति तत्परकरणेनैव व्यावृत्तिसिद्धौ प्रवर्तकतया निवर्तकतया वा अचारितार्थ्यस्य दुर्वारत्वात्
अप्लुतादप्लुते इत्यनयोरन्यतरस्यैव वैयर्थ्यापत्तेश्च अत एव सः उच्चारणं रुच्चारणमिति षष्ठीसमासे सुस्तोजसः रुच्चारण
मिति पुनस्तत्र सस्य रुत्वे रोरीति लोपे दीर्घत्वे सुश्रोता रुच्चारणमिति भवति अत्र हशि चेत्युत्वं न ङसंज्ञसकारस्थानिकरु
त्वस्यासिद्धत्वेन हशपरत्वाभावात् रुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धमिति पूर्वग्रहणेनोत्वविध्यग्रहणमिति कस्य
चेत्तु तदापत्तिर्दुर्वारा स्यात् किंचैवमर्थाधिकारात्सर्वत्रेत्याग्रहे मनोरथोपि न स्यात् अत्र च ज्ञापकं तत्परत्वे कृतेपि अप्लु
त इति कृतं तदाह प्रतियोगित्वेनेति एवं चाश्रयात्सिद्धत्वं वदतो ज्ञापकत्वमंगीकुर्वतो मम न पूर्वोक्तानुपपत्तिरिति
भावः ज्ञापकस्थले एवं वक्तुं शक्यत्वात् विशेषणद्वयं प्लुतासिद्धत्वाभावप्रतिपादनद्वारा तपरकरणकृतप्लुतव्यावृत्त्य रामः
नुवादकमिति न दोष इति मान्याः ॥ हे पयो डिति केचित्तु मनेहेहे प्रयोग इति सूत्रस्य विध्यर्थतोक्ते स्तद्रीत्या हे प्राद्ध प्रयो- ७१
ग अन्यथा हैहयोरेवेति नियमान्न स्यादिति एकपदे इति समस्तस्येत्यर्थः ॥ वर्णद्वयस्यानिमित्तं ग्राह्यम् अन्यथा वर्णत्र-

यापेक्षत्वेनद्वयेन्त्यःसंगतंस्यात् स्थानिनो निमित्तत्वानाश्रयणाच्च हेतुगर्भं चेदं विशेषणम् ।उक्तेत्विति आद्गुणवित्यादिः।।प
रत्वादिति इदं च कार्यकालतायां यथोद्देशेतु त्रिपाद्या असिद्धत्वाद्विप्रतिषेधसूत्रस्य तत्राप्रवृत्तिः तत्रसूत्रे यथोद्देशएवे
तिग्रंथस्तु फलाभावात् कार्यकालतानेत्येवं परः सिद्धान्तो।। अयं तु अन्यथाकोटिप्रविष्ट इति पूर्वपक्षग्रंथप्राय इति नवि
रोध इति बोध्यम् यद्वा वक्ष्यमाणरीत्या स्वदृष्ट्यासिद्धस्यापि परस्यपूर्वं प्रतिसिद्धस्य वलीयस्त्व वोधनेन प्रतिवंधकमित्या
हुः नत्वत्रैपादिकेऽन्तरंगपरिभाषानेति सिद्धांतितत्वात्कथमिदमित्याह परिभाषेति नक्षतिरिति अयंभावः अन्तरंगशा
स्त्रमऽस्यालिंगमित्युक्तत्वादियं परिभाषा वहिरंगमापद्येदिति प्रतिपादयति अन्तरंगं प्रतीति गृहीतोपदेशमुत्वमुःत्वु
तं कथं पश्येत् यथा जाततत्वसाक्षात्कारेण मिथ्यात्वेन जगन्मिथ्येति गृह्यमाणशिष्यं प्रतिजगन्मिथ्येत्युपदिश्यतेत्तद्वदि
ति परं प्रति अन्यं प्रति नन्वेवं रामइत्यादौ श्रुत्वानापत्तिरत्वोपस्यासिद्धत्वादत आह अन्तरंगस्येति प्रतिपाद्येति यं प्रति
पाद्यतेउपदिश्यते तत्तदऽभावेइत्यर्थः।। इदं च यथोद्देशेत्रैपादिकेऽन्तरंगेऽसिद्धत्वे प्रतिवंधकं।कार्यकालतायां तु पूर्वत्रा-
सिद्धमित्यनेन विरोधादिकं ग्रंथांतरतोऽवसेयम् स्पष्टं भाष्ये इति नन्वेवमेकादेशात्पूर्वं तु नोविप्रतिषेधेनेति सूत्रप्रत्याख्या
इति सूत्रभाष्योक्तविप्रतिषेधाऽनुपपत्तिः अन्तरङ्गबहिरंगयोर्विप्रतिषेधायोगादिति चेन्न देवदत्ता३ अत्रिगच्छामि३

स·भ· अहमित्यादौ तयोः समत्वेन तद्योगात् यत्र तु न तथा एहि कृष्ण ३ अत्र गौश्चरतीत्यादौ तन्नासामन्तरङ्गत्वास्तु न इति तन्न
७२ वोद्द्योते स्पष्टम् अनन्त्यस्यापीति पूर्वोदाहरणयोः प्लुतो वोध्यः॥ नन्वनुवध्यत इति व्युत्पत्त्या उकारपररेफस्य ग्रहणेन·
प्रातरत्रेत्यादिव्यावृत्तावपि रुधातोरवारणमत आह उकारेत्संज्ञकेति अनुनासिकनिर्देशादीदृशार्थलाभः नन्वेवं किं
मानमिति चेत् व्याख्यानमेव ग्रहणे इको गुणेति निर्देशाद्धेतोरर्थवतो ग्रहणाच्च प्रोऽत्रेत्यत्रोत्वं न स्यादिति न वा-
च्यम् अशब्दान्तद्वन्द्वेनेति पूर्वनिपातप्रकरणमनित्यमिति भावः॥ मूलेऽसंधिः सौत्र इति· सूत्रे कृतः सौत्रः कृतसन्धे
त्पण् न चानुकरणं चानितिपरमिति निपातत्वे ओदिति प्रगृह्यत्वेऽन्याय्यत्वमेवसंधेरिति वाच्यम् मूलस्य कृत्स्नो योगण
वप्रवृत्तेः न च माङ्दीव्यतोऽणित्यत्रेवैकदेशविकृतन्यायेन निपातत्वमिति द्यः उभयाऽनुकरणेऽप्यन्यतराऽनुका-
र्यनिष्ठधर्मातिदेशस्य भवतेरद्दति सूत्रे शास्त्रे ध्वनितत्वादिति वाच्यम् निपातत्वस्यावत्परिमाणनिष्ठत्वात् भ
गोअघोशब्दयोर्निपातत्वाऽनंगीकाराच्च। वस्तुत इति अघोशब्दान्तद्वन्द्वे सूत्रतः षष्ठीलुक् नन्वेवं सौत्रत्वस्याव राम:
श्यकत्वे कुतोऽस्यावास्तवत्वमिति चेन्न॥ अत्र पक्षेऽर्थवत्परिभाषासंचारेण विभोरिदं सुप्रभगोरिदमऽघोरिद- ७२
मित्यादेर्वारणात् ओदन्ताऽनुकरणेऽप्यसंभवात् तत्संचारेण स्यात् यद्वा सांतराऽलोभयाऽनुकरणस्य मूलकृ

नोक्तत्वात् सान्तपक्षस्य भाष्याऽसंमतत्वसूचनाय वस्तुतइत्युक्तम् अतएवमतुवसोरिति सूत्रेभोभगोअघोइत्यविभक्तिप्रति
रूपकनिपातत्वमुक्तम् विभक्त्यंतंच वार्तिकनिष्पन्नं रान्तमेवेति तत्सद्भावेत्वे नरान्तस्यैव निपातत्वसिद्धिः॥ सांतनिपात
सत्वे तु मानाभावः। इदमेवाभिप्रेत्य पूर्वं रत्नेभाष्यस्वरसोप्येवमेवेत्युक्तम्॥ सान्ताऽनुकरणेरान्तानां नस्यादित्यपिशब्द-
रत्नोक्तमऽवसंधेयम्॥ लोपेचेति॥ एतेनासाधारणनिवेशस्याऽसंमतिं सूचितवान् नियमशास्त्राणीतिन त्वऽभूमहणाभावे
यत्त्वार्थेसूत्रस्यावश्यकत्वेनकथं नियमार्थकत्वमितिचेन्न। तावन्मात्र फलकत्वे प्रक्रियालाघवाय भोभगोइत्यऽनन्त
रमिदं पठित्वाऽनेनयत्वमेव बिदधीतेति निषेधकानीति इतिहेतोः। पयःक्षित्यादौदोषइत्यन्वयः हे रामेत्यादावितिआ
दिनातेजस्विन् पाहीत्यादि पदत्वासिद्धिरिति तथाचपदात्परत्वाऽभावे पाहीत्यस्य निघातोनस्यात् तेजस्विन्इत्यस्याविद्य-
मानत्वात् रामेत्यत्र नामंत्रितइतिनिषेधेनतत्वाभावात् हेशब्दाश्रयोपि नस्तः इयंशंकाकार्यकालपक्षेपिस्फुटैव यथोद्दे
शेपिनित्यत्वाल्लोपेतदऽसिद्धिरेव। प्रकृते लोपेन नदऽनुत्पत्तेरेवाव्यवाख्यानाद्धासुवन्तत्वेति नच विशेषणतयालाभ्य-
पाम् अलूमात्रवृत्तिधर्मोऽघटितेत्युक्तत्वात् इदंच निमित्तरूपकार्याऽतिदेशपक्षे विधेयरूपकार्याऽतिदेशेप्याह तन्त्र
युक्तेति प्रत्ययलक्षणेनापीतिपूर्वान्वयि ननुतेन सुप्त्वमेव कुतो नातिदिश्यतेतत्राह नप्रत्ययेति तन्निमित्तकव्यवहार

स॰ भ॰ स्यवेति सचाप्राप्तीयोपिदोषाऽभावात् संकोचे मानाभावाच्च एवमिति यथाऽग्रहीदित्यत्रेटूत्वेन स्थानिनेति तदृति इट्त्वा
७३ त्तिदेशात्सलोपस्तथेत्यर्थः उक्तरीत्येति अनलूनिष्ठधर्मवत्त्वेन सुड्व्याडित्यर्थः हलिति तु सुतिसीनां विशेषणमिति भावः।
उक्तरीत्या यस्थानीनत्रेत्यन्वयः स्थानिनि सकारे जायमानस्य सावर्धिपदमिति पक्षे प्राप्तत्वाभावाय प्रवर्त्तमानस्यादेशे
लोपपरत्तः नत्रूत्तरेणसमानाधिकरणम् तत्रपरेऽतिदेशेनप्रवृत्त्यादीर्घोहन् शब्देनदीर्घइतियोजनादिशिति।दिगर्थस्तु
हल्ङ्याब्भ्य इति सूत्रे सुत्वादिना स्थानिनेति श्रौतेपि तत्र न दोषः अन्यथाप्रपठ्येत्यादावाऽतिदेशात्वात्स्यादिति सास्नीलोम्नीरा
माये त्यादिरनुसन्धेयः।एतेनसुप्परत्वस्याप्राप्तीयत्वात्कथमतिदेशइत्यानुमानिकेपि कथमऽल्विधीनामतिदेशः अ
न्यथा द्युकामइत्यादौ वलिलोपः स्यादिति चापास्तम् मतेनेति अन्यथा वार्तिकसिद्धविभक्त्यन्तप्रतिरूपकत्वेन निपात-
त्वमिति भाष्योक्तमनायाससाध्यं मार्गमऽपहाय आकृतिगणत्वेन चाद्यन्तभावनं कुर्यादिति भावः त्रयाणामिति। ननु नि-
पात भोः शब्देनैव सर्वेषां फलानामऽन्यथासिद्धिं प्रदर्श्यइयोरेवाऽवपृथक्त्वमुक्तं प्रादुस्त्वेन तत्कथमुच्यते।। त्रयाणामाव राम॰
पृथक्त्वमिति चेच्छृणु वार्तिकविहितस्योकारस्यसिद्धत्वेन रोरुत्वाश्रयात्सिद्धत्वेनातः परत्वाः सत्वे नोत्वे ओत्वस्यासिद्धत्वे नातः ७३
परत्वादाद्गुणे पूर्वरूपे भोअच्युतेत्यादेः सिद्धिरिति फलसत्वादिति इदं तु चिन्त्यम् भोभगोइतिसूत्रे ओत्तोगार्ग्यस्येति व

कुराद्यो शीलस्यैव सिद्धे पूर्वग्रहणं किमर्थम् एवं हि पंचमीनिर्देशाद॰ व्यवधानाश्रयणानायासेन लाभः यथान्यासे तु भोभगोअ
घोग्रहणेन ज्ञापकेन साध्यं तदित्यपि गौरवमिति॥ व्योर्लघुसौत्रत्वादिति समाहारद्वन्द्वविषये एकशेषाप्रवृत्तेरहुणद्-
त्यादाविव एकेनैवादेशेनोभयोर्निवृत्त्यापत्तिरन्यथा स्यादिति भावः एवमेव जश्शः कप्रि ससजुषोरुः त्यदादीनामः श्रीद्रिशा
ल्योर्ढक् इत्यादौ बोध्यः तत्र कुतो न सौत्रत्वमुक्तमिति चिन्त्यम्। यद्वा भोभगो इति सूत्रादग्रहणानुवृत्त्या यकारस्यैवादेश
त्ववारणाय व्योरित्यावर्त्योभयोरादेशत्वमिति तद्धि त्वेन तद्धि शेषस्यावश्यकत्वेन सौत्रत्वं विना गत्यंतराभावादित्याशय
इति वृत्तिरिति॥ अत्रास्वरसबीजं तु रोरित्यनुवर्त्यरोः स्थाने यौ व्यौ तयोरित्यर्थेनात्राप्राप्तिरेवेति वग्रहणं तु लोपः शाकल्य
स्येत्युत्तरार्थमेव अत एव हरयिह विष्णविहेत्यत्रैव तत्सूत्रोल्लेखः स्पष्टं चेदं भोभगोरिति शेषाद्योतने ओतो गार्ग्यस्य यका
रसाहचर्यादिति अत्रेदं चिन्त्यम् लमचकायत्रेत्यादौ दस्यरुत्वे यत्वे तथाभूतस्यापि यस्य संभवात्कथमेतदिति एरर्थः य
र्थः तमिच्छति यथीयति इत्यादौ तत्संभवाच्च॥ विच्छेदादिति॰ लोपः शाकल्यस्येत्यत्रेति भावः। तत्र हि शाकल्यस्यैवान्य
र्थ सत्वाड्रोसस्तु गार्ग्यादिमतेपि लोपसत्वेन वाच्यार्थविरोधान्नसम्बन्ध इति भावः॥ भोसादिपूर्वक इति॰ उच्चारणार्थो
कारेण निर्देशोऽतो न रुत्वादि भाष्यानुसेति अत्र यदुक्तं व्यंतल्लोपः शाकल्यस्येत्यत्रोक्तम्॥ हलिसउभयोरपिति अन्य

स·भ· मतेचरितार्थस्यासिद्धत्वात् आदेशोनतुनरंलोपइत्याशयः सर्वेषांग्रहणबोधितशाकटायनमतविहितनिरवकाश
७५ लोपेनबाधादादेशाप्रवृत्तौस्यानिनोलोपेनोभयोरदर्शनमितिवाइतिप्राप्तौतीनियवयोः शाकल्यस्येदमतेलोपः यव
योर्हलिसर्वेषांमतेलोपइत्यनयोर्विरोधेनरत्नमुदूसुइत्यादौजश्त्वचर्त्वयोरिवासिद्धशास्त्रेणव्यवस्थापत्तौमतान्तरे[illegible]
ऽभावापत्त्याविकल्पापत्तिरितिभावः॥एतेनतदऽभावेनित्यविधेर्दुर्वारतयाशंकानिरस्ताइत्यपास्तम् अचीतिक[illegible]
ति मोऽनुस्वारइत्यत्रहलीतिकर्तव्यंसर्वेषांग्रहणंयोगविभागश्चमास्तुइत्याशयः यथान्यासेएवसर्वेषांग्रहण[illegible]
स्यादितिकुतोनोक्तमितिचेच्छृणु गार्ग्यस्येत्यस्यासम्बन्धायत्तदावश्यकत्वादिति एवंसतिसर्वेषामितिवाक्यार्थविरो
धःस्यादितिचेन्न॥तस्योपायान्तरत्वात् वैयर्थ्यापत्तेरिति पूर्वोक्तो चीतिन्यासएवास्तुसर्वेषामितिमास्तुइतिचेत् इष्टा
पत्तेः अन्येतुउञिचपदेइत्यत्रानुवृत्तगार्ग्यपदंनपूजार्थमानाभावात् उत्तरसूत्रेपिनित्यत्वार्थकसर्वेषांग्रहणाच्च
किन्तुविकल्पार्थंतेनालघुप्रयत्नेपिविकल्पतइतिसूत्रकाराशयंवर्णयंति पूर्वोक्तरीत्याफलसत्त्वादाह॥अव्ययपरे राम:
ति· ननुशब्दत्वेनसादृश्यग्रहेपिनदोषः॥येनविधिरित्यत्रस्वस्यचेतिपाठेनसुपूभिन्नेशब्देसुवंतेइत्यर्थेनाहोभ्यांदी- ७५
र्घाहोनिदाघेत्यादिसिद्धेरतआहासुवंतइति।वस्तुतःस्वस्यचेत्यस्यवाचनिकत्वेप्यऽसहायस्यैवस्वस्यरूपस्यसंज्ञाम-

त्रेषु सर्वेषामित्यादिलिंगादिति॰ ऋहोभ्यामित्यत्र दोषएवेति बोध्यम्॥ ॥ह्रलोपे॰ ननु रित्तु न दोषः तत्र रेफं परित्यज्य
पकारादेरप्यनुबंधं शक्यत्वाद्रुपोत्तमं रित्तीत्यत्रोपोत्तमं रित्तीति वाच्यमित्यत आह॰ चचारेति॰ दोषापत्तेरिति न च लक्ष
णप्रतिपदोक्तपरिभाषया निस्तारः प्रत्यक्षसिद्धपूर्वत्रासिद्धमित्यस्य बाधापेक्षया लक्षणप्रतिपदोक्तपरिभाषाबा
धस्यैवोचितत्वात् इति भावः भाष्ये तु इति॰ अयं भावः कर्मण्यणि अदर्शनं लोप इत्यनेन संकेतितस्य ग्रहणमित्य
स्य वक्तुम् शक्यत्वेन प्रसक्ताप्रसक्तसाधारणादर्शनाभावस्य लुप्धात्वर्थत्वेन ग्रहणापत्तौ शिवइहेत्यादौ भावरूपाति
देशेपि स्थान्यदर्शनसत्वेन तज्ज्ञानकेति शिवपूर्वस्य दीर्घापत्तिः न च यलोपासिद्धत्वेन न तत्परत्वं पूर्वपदेनैतत्सूत्राप्र
हस्येष्टत्वात् ममत्तु प्रसक्तादर्शनस्यैव शास्त्रे लोपपदार्थत्वेन भावरूपेणाचादेशेन स्थानिप्रसंगस्यैव बाधेन प्रसक्तदर्श
नविरहेणासंज्ञैवेनेति न दोष इति स्पष्टं चेदं लोपसंज्ञासूत्रे भाष्ये॰ सिपि धातोरिति॥ इत्यनुवर्तमाने दश्चेत्यर्थः॥ विप्रति
षेधे परस्परेति॰ अन्यथा सर्वथा विरोधाभावे संदेहाभावेन षष्ठीस्थान इत्यस्येवास्यापि प्रवृत्त्यभावे सिद्धे विप्रतिषेधपद
वैयर्थ्यापत्तिः तेनासिद्धत्वविषयेऽन्यतरविरोधेपि परस्परविरोधाभावेन नास्य प्रवृत्तिः प्रवृत्तिकाले इति॰ तदवच्छिन्नेका
लेइत्यर्थः। तस्मात्पूर्वकाले उत्तरकाले च तत्सत्वेपि तत्काले तदसंभवरूपविरोधसत्वे तत्प्रवृत्तौ नियामकत्वं भाष्यात्स्वीक्रि

स·भ· यत्तेइतिभावः॥पुनर्द्विर्भवतीति·तदभावपक्षेइतिभावः॥ ॥एतन्मदोरनंतरइति सुइति प्रत्ययग्रहणात्तदंतग्रहणास
७५ त्वेननदादीन्पस्योपस्थित्याएनदंततदादेरनंतरस्यलोपइत्यर्थेनरामःस दत्तातीत्यादौनदोषइतिबोध्यम्॥ ॥इतिशे
खरविद्वतिसंग्रहे स्वादिसन्धिः॥ ॥श्रीगणेशायनमः॥ ॥स्वादिविधौप्रातिपदिकाधिकारादिति ङ्याप्ग्रहणंत्वन्या-
र्थमितिभावः एतेनङ्याप्योप्यधिकारात् तस्यचप्राथम्यात्सूचीकटाहन्यायात् स्त्रीप्रत्ययप्रकरणमादौलक्तुमुचितमि
त्यपास्तम् तद्धिधाववपिप्रातिपदिकाधिकारत्व॰तांसंज्ञामिति॰ तत्संज्ञाविधायकंसूत्रमित्यर्थः॥यथाश्रुतेऽर्थेतद्दित्यनेना
भेदोबाधितःस्यात् अत्रेति केचित्तु एतत्संज्ञाफलभूतविभक्तिभेदकूटविशिष्टस्वव्यभिचारिकप्रत्ययत्वम् प्रकृत्य
न्यतरसमभिव्याहारानपेक्षयालोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वम् देवदत्तोभवति देवदत्तोगार्ग्य इत्यादौ
देवदत्तोगार्ग्यइतिसमुदायस्याप्रत्ययान्तस्याधातोश्चविभक्तिप्रागभूतस्यसंज्ञावारणायएतत्संज्ञाफलभूतत्वेन
विभक्तिविशेषिता अर्थवत्त्वमादाय चिकीर्षितायासंज्ञातत्फलेत्यर्थः देवदत्तोगार्ग्यइत्यत्र गार्ग्यप्रकृतिकस्यसुपः रामः
गार्ग्यइत्येतन्निष्ठसंज्ञाफलभूतत्वेपिचिकीर्षितदेवदत्तोगार्ग्यइत्येतन्निष्ठसंज्ञाफलभूतत्वाभावात् नातिव्याप्तिः ७५
एतेनसुवितरेत्युक्तेयेवतिङ् विभक्तिव्यावृत्तौ सिद्धायांविशेषणंव्यर्थमित्यपास्तम्॥स्वड्ढित्यादावव्याप्तेश्च·सिद्धान्तेतुवि

भक्तिग्रहणं प्रत्ययोपलक्षणमिति खड्वादौ न दोषः चालिनीन्यायेनासंभववारणाय भेदकूटेति उभयभेदमादायासंभव
वारणाय विभक्तित्वेतरधर्मानवच्छिन्नप्रतियोगिताकत्वं भेदकूटविशेषणमवश्यं देयमेवेति अत एव तत्तद्भेदमा
दाय न दोषः तत्तद्भेदस्य विभक्तित्वेतरतारूपधर्मावच्छिन्नत्वात् किमर्थं भेदकूटेति चेदत्रैव तात्पर्यात् सांकूटिनं प-
क्त्रिममित्यादौ संकूटिन् कूटिन् पक्त्रि इत्येतेषु अणमवर्पक्षेषु अव्याप्तिवारणाय स्वव्यभिचारिकत्वेन प्रत्ययो विशे
षितः ननु लौकिकप्रक्रियावाक्ये पाकेन निर्वृत्तमित्यत्र स्वव्यभिचारित्वमिति तु न स्वव्यभिचारिकेत्यत्र स्वं व्यभिचा
रियस्य सः यस्य प्रातिपदिकसंज्ञाचिकीर्षिता स स्वपदार्थः । तत्त्वं च यत्र यत् व्यभिचारित्वमाने यत्तदसमवायिपरि
निष्ठितसमवायित्वं तत्र तत्त्वं अस्ति च देवदत्तो गार्ग्य इत्यत्र न तथा सुप्रत्ययव्यभिचारित्वं देवदत्तो गार्ग्य इत्यत्राने
यता दृश्यो यः सुस्तदसमवायि अभाद्यं ते देवदत्तो गार्ग्यराज्ञः पुरुषमित्यादौ परिनिष्ठिते देवदत्तो गार्ग्येत्यस्य सम-
वायित्वात् सांकूटिनादौ तु सं कूटिन् कूटिनादीनामण्समवाय्यसमवायिपरनिष्ठितसमवायित्वं नास्तीति नाव्याप्तिः
॥ पंचतावमिय इत्यत्र समुदायोत्तरस्याध [illegible] नजंतस्य यथा न प्रातिपदिकत्वम् ॰ तथा सांकूटिनं पक्त्रिम
मित्यादौ तदपेक्षत्वेनार्थवत्त्वाभावेन तन्न स्यादतः प्रत्ययाव्यवहितत्वेन प्रत्ययो विशेषणीयः यस्यार्थवत्त्वम्

श.भ. नैमंतस्यापेक्ष्य माणप्रत्ययस्य च मध्ये प्रत्यययोर्थवधायकोनचेद्विति तदर्थः॥ सर्वत्र विभक्तग्रहणे वर्णमात्रस्य ग्रहणमवधारणीयमूल
७६ केऽपदं शमित्यादौ भावप्रपदके उपपदापेक्षत्वेनाव्याप्तिवारणाय। एधांचक्रे इत्यादौ च अनुप्रयुज्यमानापेक्षत्वेनाव्याप्तिवारणा
य च निभसंकाशादीनामुत्तरपदस्य वप्रयुज्यमानानां पूर्वपदार्थापेक्षत्वेनाव्याप्तिवारणाय चोपसर्गाणां धात्वपेक्षत्वेनाव्याप्ति
वारणाय च प्रत्ययेति निर्देशः प्रत्ययमात्रे कृत्तद्धितव्याप्तिवारणाय प्रकृतीति। धातुप्रत्ययांतयोर्विभक्त्यनपेक्षत्वेन तन्नद्दो-
षाभावात् तदकरणलाघवानुरोधेन विभक्त्यपेक्षयेत्युक्तौ तु मधुलिड्भ्यामित्यादिकेषु अश्रूयमाणविभक्तिकत्वेन विभक्त्यनपेक्षपा-
र्थबोधकेषु अव्याप्तिवारणाय नञर्थद्वयनिवेशः केवलकृत्तद्धितानामपि विभक्त्यनुसंधानापेक्षत्वेन केवलकृत्तद्धितप्रसंग
भंगाय एतत्संज्ञाफलभूतविभक्त्यनुसंधानेन लोकेर्थबोधकत्वमिति नोक्तमिति सर्वमवदातमिति परिष्कुर्वते न च न केवलप्रत्य
यस्येति। अनुपसर्जनकृतिकस्येत्यादिः अतः दृषत्+हृदित्यादन्तत्वेपि न क्षतिः अन्यथा तन्नैवातिव्याप्तिवारणार्थं प्रत्ययपर्युदासः
स्यात् तस्य तु व्यपदेशिवद्भावेन प्रत्ययांतत्वात् प्रत्ययांतपर्युदासेनैव संज्ञावारणात् पूर्वं जाताया अतिदेशेन सत्वेपि न क्ष रा.म:
तिः। अत एव पदेति सूत्रद्वयेन सामर्थ्येनार्थवत्वस्याभिमतत्वादेवेत्यर्थः। अत एव भाष्यकैयटाभ्यां योपन्यासः भाष्यमात्रोप ७६
न्यासेन तु तत्रैव तथार्थवत्त्वं लभ्येत कैयटाद्वययपात्नाभः पूर्वं अतथार्थवत्वस्य तथा मूलए व स्फुटीभविष्यति। कृत्तद्धितांतं चैवा

र्थवदिति अथवन्यदग्रहीतार्थवदित्यर्थः ॥ एवमेवेति ॥ —— औपाधिकमेदं वास्तवभेदमादाय वावोध्यासाद्दृष्टोपपत्तिः
अन्यथा त्वे पूर्वत्र तथानभिमतत्वे । न तत्सामर्थ्यादिति पर्युदासेनैव निरर्थकव्यावृत्तौ व्यावर्त्यान्तराभावेन वैयर्थ्यमिति भावः पूर्व
सूत्रे परिष्कृतार्थवत्ववादिनो मम तु प्रत्ययदेवदत्तो गार्ग्यादिरूपव्यावर्त्यमत्वेन तद्ग्रहस्य सामर्थ्याभावात् अनुवृत्तिपर्यन्ता
नुधावनं न संगच्छते ननु पूर्वत्र नञार्थवत्वसंग्रहः केयटस्य नाभिमतः अन्यथार्थाधिकारादित्येव वदेत् किं चैतत्सामर्थ्यस्या
नुवृत्तिप्रयोजकत्वेऽपि नेदं तद्विध्यप्रयोजकत्वेन वक्तव्यानावादिदित्यपि वक्तुं शक्यमित्यरुचेराह । किं चेति । अत एव तद्धिते
ति । सूत्रद्वयेऽप्युक्तार्थांगीकारादेवेत्यर्थः फलाभावेनेति एतेन तद्धितग्रहणमपि निष्फलमिति सूचितं प्रातिपदिकसंज्ञायाद्
निशेषः औत्सर्गिकैकवचनं तु सत्येव गमके लुगपि न धातुसाहचर्येण स्वप्रकृतित्वात् अयेतरव्यवहिताव्यवहितान्यतर
त्वावयवेक लुक्प्रयोजकधातुत्वप्रातिपदिकत्वान्यतरधर्मवदवयवसमभिव्याहृतस्यैव लुग्विधानात् कांडे तिष्ठतीत्यादौ
तिष्ठतीत्यादिसमभिव्याहृतत्वादतिव्याप्तिवारणाय धातुत्वप्रातिपदिकत्वान्यतरधर्मवत्संबंधित्वेनावयवो विशेषितः लु
क्प्रयोजकत्वप्रत्यासत्तिध्वननायान्यतरविशेषणं न तु व्यावर्तकम् एवमपि तत्रैव तत्प्रयोजकधातुत्ववतिष्ठति समुदा
यावयवतिष्ठसमभिव्याहृतत्वादतिव्याप्तिवारणाय स्वावयवकत्वेन धर्मवान् विशेषितः स्वमवयवो यस्येति तदर्थः स्व

णे ह्वोर्लुक्प्रतियोगिपरः अस्ति च पुत्रीयेत्यत्र तथा पुत्रमिति सुप्प्रत्ययावयवकं तत्प्रयोजकधातुत्ववत् पुत्रीयेत्ये
तदवयवकत्वं च समभिव्याहृतत्वात् प्रकृते तु न दोषः एवमपि तत्रैव तथा प्रकृतिमादाय तदवयवं वादायातिव्याप्ति
वारणाय स्वप्रकृतित्वाश्रयेतरत्वेनावयवो विशेषितः तत्पर्यायस्याधिकरणोत्तुकोत्वावयवमादाय स्याद्देवसातिव्या
प्तिरत आश्रयेत्यैवमुक्तम् एवमपि राजपुरुषादौ पुरुषाद्युत्तरसुपि अव्याप्तिवारणायाव्यवहितत्वेनावयवो विशे
षितः विशेषिते तु तथाभूतं पूर्वपदमादाय तत्परिहारः तथा तत्रैव पूर्वपदोत्तरसुपि अव्याप्तिवारणायान्यतरत्वेन स एव विशे-
षित इत्यलम् यद्वा तत्साहचर्यादादेशरहितस्य वृत्त्यवयवस्य प्रातिपदिकावयवस्य लुगित्यर्थः परमकांडे इत्यत्र वृत्त्यवयव-
सत्वादादेशरहितेति ननु सिद्धांतेपि सोमसुताश्वः सोमसुताश्वः सोमसुतानतीत्यादौ एकादेशं तद्वद्भावेन सुब्त्वात् परादिव
द्भावेन धातुत्वप्रातिपदिकत्वाभ्यां तदवयवत्वेन लुक् स्यादिति चेन्न उभयत्राश्रयणे नांतादिवयवत्वोभयाभावात् अधिक
रणे चेति निर्देशेन विभक्त्येकादेशो नांतवदित्युक्तेश्च पंचमीसमासेन स्थानिवत्त्वाच्च अपरनिमित्तकत्वेनांतरंगे लुकि परनिमि 
त्तैकादेशस्य वहिरंगासिद्धत्वाच्च प्रत्याख्यानेति प्रत्ययांतपर्युदासेत्यर्थः अनेन न प्रातिपदिकत्वमिति नियमशास्त्राणां निषेध 
मुखेन प्रवृत्तिरिति पक्षे इदं विधिमुखेन प्रवृत्तिरिति पक्षे तु सामान्यतोर्थवत्त्वग्रहे पि प्रत्ययांतभिन्नपरतत्समासजातीय स

मुदायभिन्नपरंत्तद्धितिसंकोचादेवनतत्प्राप्तिरित्यनेनप्राप्तिविरहाद्संगतिःस्यात्॥ विधिमुखेनप्रवृत्तिरितिपक्षेप्याह नाप्युत्त
रेति टावापत्तिरिति टजंतस्योपसर्जनतयाटिड्ढेति द्विगोरिति वाङीयोप्राप्तिरितिभावः उपसर्जनह्रस्वेनतुननिर्वाहः यस्यप्राति
पदिकस्यसविधीयते तदर्थंप्रत्युपसर्जनत्वाभावेनसुगोकुलमित्यादाविवतद्प्राप्तेः वस्तुतोङीवापत्तिरितिपाठोपिसुयोज्योय-
स्मात्ङीप्विधीयते तदर्थंप्रतिटिदादेरनुपसर्जनत्वे एवप्रत्यासत्यातत्प्रवृत्त्याङीप्प्राप्तेःसत्त्वात् ननूत्तरपदत्वमुपजीव्यजाय
मानतत्पुरुषसंज्ञाटच्प्रवृत्त्यातद्धितांतत्वेनप्रातिपदिकसंज्ञाद्वाराटावादेरानंतर्यविघातकस्यानिमित्तंस्यादितिचेत्सत्यम् अलौ
किकेएवप्रक्रियावाक्येसमासांताः प्रवर्तन्तइतिसिद्धांतात् पंचनजसनौजसइत्यवस्थायामेववहुव्रीहिसंज्ञासमकालमेव
टच्प्रवृत्त्याततस्तद्धितांतत्वेनप्रातिपदिकत्वोत्तरपदहेतुकद्विगुत्वयोःप्राप्तावपरनिमित्तकत्वेनांतरंगत्वात् द्विगुसंज्ञायाः
प्राक्प्रातिपदिकत्वेनथैवांतरंगत्वात् टाप्स्यात् सन्निपातलक्षणायाद्विगुसंज्ञायाःपूर्वमप्रवृत्तत्वात् परिभाषाया अप्रा
प्तेः ममत्वर्थवत्वाभावेननप्रातिपदिकत्वमितिटाप् इतिनवीनाप्रायःप्रतिभातीतिकेचित् विफलइति प्रत्ययइति सूत्रभा
ष्यविरुद्धश्चेत्यपिवोध्यम् तत्रहिप्रकृत्युपपदोपाधीनामपिप्रत्ययत्वेकिंदूषणमिति प्रश्नेपरत्वमाद्युदात्तत्वमंगसंज्ञेत्येतेवि
षयः प्रसज्येरन्नित्युक्तं ननुप्रातिपदिकत्वंनस्यादित्यपि नवक्तुतदपिवक्तव्यमिति ननुयथाश्रुतेपिकिमर्थंवज्रहणव्यावर्त्यंग

स॰म॰ त्पर्युदासेन लभ्यत इत्युक्तमत आह दृष्टेति निरर्थकोयं समुदाय इत्यर्थः पदार्थानां समन्वयस्यैव वाक्यशक्यत्वेन तदभावा-
७८ त्तत्वम् द्विगर्थस्तु समासेति नियमेन नास्याव्याप्तिः। तस्यार्थवत्समुदायविषयकत्वात् साजात्यादिति भट्टाः यत्तच्छब्दार्थ
योरिति तच्छब्दान्यधीविशेष्ययोः अननुगतत्वेनेति आनंत्यात् शब्दानुगमस्येति यत्तस्येत्येवंरूपस्य ननु बुद्धिस्थत्वे
न तयोरनुगम एवात आह स्वव्वच्छेद्येति स्वत्वभावेनेति नियमस्वरूपभंगस्य तावताप्यभावादिति भावः स्वातंत्र्येणापीत्य
पिनापारतंत्र्यसमुच्चयः अन्यथा सर्वं वाक्यमिति न्यायेन स्वातंत्र्येणैवेत्यर्थापत्त्या अनुकरणस्येति शब्दापेक्षस्यापि प्रयोगेण-
स्वातंत्र्येणैव प्रयोगार्हत्वाभावान्नियमेन व्याप्तिर्न स्यात्॰ भाष्ये सुवंतानामिति॰ पूर्वोक्तभाष्यानन्तरं प्रकृतसूत्रभाष्ये इत्यर्थः।
भेदसंसर्गेति। वाक्ये पदार्थयोर्विभागेनापि प्रयोगे सतीतरसंसर्गाकांक्षा भेदसंसर्गः सद्वारभूतो यस्य विशिष्यार्थवत्त्वस्य तद्यु
क्तादित्यर्थः समासेपि वाक्येनैव तेन विशिष्यार्थवत्वं न हि प्रकृतिप्रत्यययोर्विभागः परश्चेति वचनात् अतो बहुपटव इत्यादे
न दोष इति भाष्यम् केचित्तु न दोष इति तादित्थ्यं नियमनिष्कर्षः स्वनिष्ठप्रकृतित्वनिरूपकप्रत्ययप्रकृत्यन्यतरसमभिव्याहा रा॰म॰
रानपेक्षप्रयोगार्हार्थवत् पूर्वोत्तरभागस्यार्थवतः समुदायस्य चेत्तु भवति तर्हि समासस्यैवेति॰ नियमशरीरं द्विवचनमात्रावाति ७८
व्याप्तिवारणायार्थवत्त्वेन पूर्वोत्तरभागौ विशेषितौ बहुपटवः पुत्रकाम्येत्यादावतिव्याप्तिवारणाय समभिव्याहारानपेक्षप्रयोगा

पुंको विकाररूपस्वार्थप्रत्यायकत्वाभावेपि प्रकृत्यर्थप्रत्यायकत्वात् प्रत्ययत्वं दुर्वारमित्यपास्तम् अमस्तु शित्करणात् न णह
इति निर्देशादिकरणानां द्योतकतया स्वार्थप्रत्यायकत्वाद् प्रत्ययत्वं पुंवादीनां तु प्रकृत्यर्थप्रत्यायकत्वात् द्योतकतया स्वार्थ
प्रत्यायकत्वाद्वा तत्वम्॥ ॥ननु यदर्थवाच्चैवोत्येवा विधानं तत्वं स्वार्थत्वमिति वंनु स्वप्रकृत्यर्थत्वं च दुर्वचं तदर्थेनासाम
भिधानादत आह॥ स्वप्रकृत्यर्थत्वं चेति॰ कोशादीत्यादिना निरुक्त निघंटसंग्रहः ननु प्रत्यायकत्वमित्येवास्तु मास्तु तत्रादि स्वश
ब्दोपादानं चेत्यत आह अतएव नभेति॰ स्वशब्दार्थानभावेण प्रत्ययशब्दे इति स्वीकारदेवेत्यर्थः। अतएवेति। स्वार्थाभावादेवनभ्य
शब्दादपि नामि शब्दप्रकारक एव बोधो नाभिहितद्विति॥ ननु कदाचिदपि नभिहितद्विति ये पिशास्त्रानभिज्ञास्ते यिद्वद्व्यवहएन
थैव प्रतिपादयंति उक्तार्थे भाष्यं प्रमाणयति॰ एतदर्थमेवेति॰ स्वान्यर्थप्रत्यायकनभादेः प्रत्ययत्वव्यावृत्त्यर्थमेवेत्यर्थद्ति विग्रहे इ
त्यर्थः स्वमर्थं प्रत्यायतीति विग्रहे इत्यर्थः एवं स्वीयपदेत्यत्रापि स्वीयार्थस्वपदेत्यर्थो बोध्यः यथा श्रुतं तु न युक्तं भाष्ये तादृशपाठ
स्यानुपलंभात् एवमुक्तिस्तु तत्रान्यस्य पदस्यात्मीयार्थकत्वं ध्वनयितुम् आत्मवाचके च्वर्थे नाभेदो बाधिस्यात् एते न एतदर्थ
मेव प्रकृत्यर्थसंग्रहार्थमेव स्वीयपदोपादानमिति॰ अन्यथा स्वशब्दमेवोपाददीत स्वीयपदे उपाते त्वात्मीयवाचक॰ स्वशब्द प्र
तिकच्छप्रत्ययांतादात्मीयप्रकृतिसंबंध्यर्थसंग्रहः आत्मवाचि प्रकृतिकादात्मसंबंधि स्वार्थसंग्रहो जायत इति भावः इति व्या

स.भ. स्वांतरमपास्तम् कर्मसाधनोपिप्रत्ययशब्दोऽस्तीत्यग्रिमभाष्यानुत्थितिप्रसंगाच्च तदर्थान्तर्भावेणेति स्वप्रकृत्यर्थान्तर्भावेणेत्यर्थः
८२ ण्यर्थान्तर्भावेणेत्यर्थः। दूत्यन्ये यत्तु विकारेति। विकार एकदेशस्थानिको हन्तस्तु चेत्यादिः आदेशः सर्वस्थानिको नशादिरिति भे
दः॥ ॥ननु तृणह इमिति निर्देशात् नयासयोरिति ज्ञापकाच्च श्नमकचोर्न दोषः॥ बहुचि तु प्रत्ययत्वाभावेपि नक्षतिरित्यरुचेराह
किंचलक्षीति पाठकोकारु विस्तुचिंत्यानभादेरपिप्रत्ययत्वापत्तेः विशेषविहितत्वस्यानवकाशत्वे सत्येव बाधकत्वप्रयोजक
त्वात् सीयुंडश्चलादेशप्रवृत्त्युत्तरं चारितार्थ्यमत आह परत्वादिति उत्कृष्टत्वादित्यर्थः ब्राह्मणाः भोज्यंतां माठरकौंडिन्यौ-
परिवेविषातामितिन्यायेन लादेशप्राप्तियोग्यविषयाभावरूपानवकाशत्वस्य सीयुटि सत्त्वेनापवादत्वादिति यावत् त्या
सुडूविषये सीयुटः प्रतिषेधेन लिङ्संबंधिना मुक्तन्यायेन बाध्यबाधकभावो नेति आख्यातेवक्ष्यमाणत्वात् तक्रकौडिन्य
न्यायस्य तु नात्राश्रयणं तदाश्रयणे हि तक्रदानोत्तरं दधिदानस्येव सीयुटि लादेशप्रवृत्तिरेव स्यात् भोजनन्यायाश्रयणे
तु परिवेषणोत्तरं भोजनस्येव तदुत्तरं तत्प्रवृत्तिर्निर्बाधैव यद्वा उक्तन्यायेन सीयुटो बलीयस्त्वाद्धि प्रतिषेधाभावेन परत्वाप्र राम:
योजकत्वादाह चेति चेन चो कार्थसमुच्चयः सीयुटएवेति यद्यपि तृतीयसूत्रे लस्थाने दुडुदात्तो भवतीति उत्पत्तिकाले ए ८२
वस्वरविधानादनुवादविषये यदागमानाद्वृत्यस्याप्रवृत्तेरागमविशिष्टस्योदात्तत्वाप्राप्त्योच्चार्यमाणस्येटएवाद्युदात्तत्वेसी

पुटः शेषनिघातसिद्धिः यत्तु सीयुडागमस्समवधानेऽलस्यानर्थकत्वादादेशासंभवेन सीयूल इत्यस्य स्थाने सीयू इत्यादेशः स्यात्स च प्रत्यय
संज्ञक आद्युदात्तश्चेत्यानुमानिकवचनेन प्राप्नोतीत्याशयः आगमानुदात्तत्वे ङित्त्वापवादविषयत्वात् पूर्वमेवानुमानिकाद्युदात्तत्वप्रवृत्ति
रिति श्रौताद्युदात्तत्वस्यैवावस्थानमित्याहुस्तन्न आनुमानिककल्पनेऽपि विशेषणाविशिष्टस्य लक्षणानुलक्षितेविशेषणान्वयद्युक्तं
गीकारात् अन्यथा पदस्य वाक्यस्य वा आद्युदात्तत्वापत्तिरिति तथापि प्रत्येकदेशयुक्तित्वादिति स्पष्टमुद्द्योतेन च क्रियमाणेऽप्यागमानु
दात्तत्वे क्रियमाणेऽपि प्रत्ययसंनियोगेनाद्युदात्तत्वे सीयुडादेर्लिङः आद्युदात्तत्वं प्रसज्येतेति भाष्यं लिङ्विधावुपस्थित्याद्युदात्तश्चेत्यस्य
विधानकाले लिङोऽनचूकत्वेनाप्रवृत्तावपि सीयुटि यदागमेति न्यायेन लिङ्त्वात्सीयुटः प्राप्नोतीत्यभिप्रायकमित्यादेशविधौ तदसं
गतिरतः कैयटासंगतिमाह कैयटेति तत्सूत्रस्य प्रदीपोद्द्योतौ तु चिंत्यावेव चिंताबीजं तु स्फुटं सूक्ष्मदृशामिति नोक्तम् यत्तु प्रकृतसू
त्रे कैयटे उपपदस्यापि प्रत्ययत्वे राजपुरुषादिषु सावकाशमुपसर्जनं पूर्वमित्येतद्बाधित्वा परत्वापत्तिरिति युक्तं तस्यायं भावः राज
पुरुषयोः सुपूनिरूपितप्रकृतित्वेऽपि शब्दान्तरापेक्षया परंपरापेक्षया वा पर्यायेण प्रयोगे प्राप्ते समस्यमानपदापेक्षयोपपदस्योपसर्ज-
नस्य पूर्वनिपातार्थं तत्सार्थकम् आदिपदग्राह्यं दास्याः पुत्र इत्यादावलुक्समासे जहिजोडमिति तिङंतपूर्वपदके च समासे तत्सार्थ
कं न हि तत्र तिङंतषष्ठ्यंतयोः प्रकृतित्वेन प्रत्ययत्वप्राप्तिरस्ति येन परत्वं प्रसज्येतेति एतेनोपसर्जनपूर्वत्वस्यानवकाशत्वाभिप्राय

सं०भं० ८३

कोविवरणग्रंथः परास्तः यदपि प्रकृतसूत्रे विकारागमेषु च परत्विज्ञानादिति भाष्यं व्याख्यानावसरे कैयटेनोक्तं न हि परत्वनिमित्ता प्रत्ययसंज्ञा अपि तु प्रत्ययसंज्ञानिमित्तं परत्वं तथा च परत्वाभावेपि अमूलकबहुजकचां प्रत्ययसंज्ञा भवति इति तस्याप्ययं भावः॥ परत्वसन्नियोगशिष्टं न प्रत्ययत्वं प्रत्ययः इति सूत्रे चकाराभावात् व्याप्तेश्च किं तु प्रत्ययत्वसंनियोगशिष्टं परत्वमिति न च तत एव ह इति निर्देशेन सन्नियोगशिष्टन्यायानित्यत्वेनाव्याप्तिः सुपरिहरेति वाच्यम् अधिकारसूत्रवाक्यार्थैकत्वेन तत्रतन्न्यायाप्रवृत्तौ विकारादिष्वति व्याप्तिः प्रवृत्तौ अमादिष्व व्याप्तिरित्युभयस्य दुर्लभत्वादिति एतेन तत्र व्याख्यावसरे उद्द्योते यदुक्तं न हि परत्वनिमित्तेति तद्व्याख्यातं त्यर्थः तथा हि सतिव्यापकाभावेन व्याप्याभावः सिध्येदिति भावः अपि तु प्रत्ययसंज्ञानिमित्तं परत्वमिति न चिंत्यं राजपुरुषइत्यादौ प्रत्ययत्वाभावेपि पुरुषशब्दस्य परत्वदर्शनात् सन्नियोगेति न्यायानित्यत्वेन अमादीनां प्रवर्तनत एव संज्ञेति च तद्व्याख्यातं चिंत्यं च तद्व्याख्याश्रयस्तु विकारागमेषु फलाभावान्न प्रत्ययत्वमित्येव आद्युदात्तत्वं च परत्वसंनियोगशिष्टं न प्रत्ययत्वसंनियोगशिष्टम् अत एव परश्चेत्यस्याग्रे आद्युदात्तश्चेति सूत्रितं वाचनिकं वागमानुदात्तत्वमित्यादि कैयटे स्पष्टम् यत्र च अमादौ फलमस्ति भवत्येव तत्र प्रत्ययत्वमित्यादिनादिगर्थस्तु प्रदीपतो वगंतव्य इत्यलं बहुनेति व्याचक्षते तराम् आपरश्चेति अपादानत्वासंभवेति गुणादिभ्यः सनादिर्भवतीत्यर्थे नायातीत्यर्थाभावेन तज्जन्यविभागानाश्रयत्वादिति भावः। षष्ठ्यर्थ आनंतर्यमिति वोद्धेकदेशाधारकस्थित्याश्रयत्वरूपषष्ठ्यर्थसंबंधनिरूपकाध्याहृतानंतरा-

रामः ८३

दिपदबोध्यानंतर्यमित्यर्थः॥ अव्यवहिता एवेति गार्ग्योष्ठगित्यत्रानंतर्यस्य षष्ठ्यर्थत्वसिद्धेर्लेशेनार्थान्तरकरणपाठ कस्य तु धेवेति

भातिषष्ठ्यंशेति· अत्र च सुपि चेत्यादिनिर्देशाल्लान्त्यर्यग्राहकादिति भाट्टव्याख्यानं तथा च प्रथमांसौकृत्यप्रत्ययैः सामानाधिकरण्यमिति भावः

भवत्येव नियमेति अयं भावः विधिर्द्विविधः नित्यो वैकल्पिकश्च तत्र नित्यविधेः अनुपस्थितस्यैकोयण् तद्घटितः साधुः स प्रयोक्तव्यः

तदघटितो न साधुः स न प्रयोक्तव्य इत्यादिरीत्या स्वविधेयाघटितासाधुत्वबोधनपर्यन्तमपि व्यापारः स्वरतीत्यादिविकल्पविधेश्च साधु

त्वबोधनपर्यन्तमेवेत्येवं स्थिते विध्यंतरबहुतेमानत्वविवक्षायां तदघटितस्यासाधुत्वं न्यायसिद्धं तदविवक्षायां तदघटितस्यासाधुत्वबो

धनार्थनियमः॥ ॥अत्र च लडादिर्निरर्थक एव भूतानि कालः पचतीत्यत्र यथा तस्यापत्यमित्यादिविकल्पविधावुपगवपत्यमुपगोर

पत्यमित्यादिप्रयोगभंगभियाश्रणाद्यघटितस्यासाधुत्वं न न्यायसिद्धं तत्र महाविभाषयावाक्यम् अन्यतरस्यांग्रहणानुवृत्त्या समासः

उपगवपत्यमित्यर्थे उपगुरिति न प्रयोक्तव्यमिति नियमेन साध्यम् स्पष्टं चेदमत्र भाष्ये विपरीतं तु नव्याख्यानात् क्रोमेप् नित्यमित्यत्र यो

गविभागादिकं तु मवंतान्निर्दिष्टार्थप्रतीतिर्यथा नियमेन स्यादित्येवमर्थं परश्चेति नियमेन तु निरर्थकोमप्स्यात् अत्यंतस्वार्थिके तु ना

स्य संबंधो महाविभाषया सह विरोधात् विभाषया हि स्वविधेयाघटितेसाधुत्वनियमेन चासाधुत्वमिति विरोधः। स्पष्ट एवेति॥ अत एवाष

डक्षेत्यादौ उत्तरसूत्रस्यान्यतरस्यांग्रहणस्य ज्ञापकत्वेन नित्यत्वमुक्तमाकरे अनुकरणे त्विति॥ अस्य च गवित्ययमाहेत्यादावितिसत्त्व-

स॰भ॰ स्यंतेन्वयः शास्त्राबोधितेति शास्त्राबोधितत्वं च शास्त्रबोधितासाधुत्वकत्वम् अतः पाचकदृत्यादिर्घत्र्विधायकशास्त्रबोधितस्य प्र
८४ योगः स्यादिति नापादनीयं परस्परं वेति तेनियमेन स्वाघटितस्य तस्यासाधुत्वबोधनात् अनुकरणेऽतिव्याप्तिवारणाय पदत्वं व्याचष्टे अप
रीतिनिहता द्यावव्याप्तिवारणाय तदपि परिष्कुरुते परीति॰ अप्रवृत्तत्वं च प्रतिबंधकाप्रतिहतप्रवृत्तिकत्वं तेन लिङ्डित्यादौ एवुलादुदृष्य
नावच्छेदकधातुत्वाक्रांतत्वेपि नान्याप्तिः हरिणेनावित्यादौ चनत्वप्रतिबंधकत्वं चनिहतेतिङ्॰ नेलक्ष्येलक्षणस्येति न्यायः लिङादावु
क्तार्थानामित्यपवादविषयत्वाचाप्रवृत्तिभावस्वेति रीत्या तत्रतत्रानेकविधं यथासंभवं बोध्यम् दिगर्थस्तु वैकल्पिकविधीनां वाग्र
हणरूपप्रतिबंधकप्रतिहतप्रवृत्तिकत्वान्नित्यग्रहणं वैकल्पिकमिति केचित् व्याचक्षते॥ ड्याप्प्रातिपदिकार्थत्वाभावेन मात्रपदे
नह्रित्वातिरिक्तकालादेर्व्यावृत्त्या च प्रथमायाअप्राप्तावपि पष्ठ्यधावतीत्यादौ द्वितीयास्यादत आह॰ नेति॥ आदिना ज्योतिष्टोमेनय
जेतेत्यादौ तृतीया संख्येति॰ संख्यावच्छिन्नेऽन्यसंख्याभावादित्यर्थः नन्वस्य संख्याभावेपि तत्संख्यासादायस्यादत आह॰ संख्येति॰ ए
तेन वाक्यातु सुवुत्पत्तिनिरासाय सदूत्य पास्तमिति भट्टाः अन्येतु संख्याभावादित्यस्याप्रतीतेरित्यर्थः ननु कर्तृकर्मप्रत्ययेप्रतीतावपि श रामः
प्यं तदूत्यादौ नप्रतीतिरस्त्येवं भावार्थकतिङ्॰ नेऽत आह॰ उक्तत्वादिति॰ एतेन धावतिपष्ठ्येत्यादौ कारकसंख्यायाउक्तत्वेपि क्रियाग ८४
तामनुक्तामादायस्यादित्यपास्तमिति व्याचक्षते॥ ॥अपवादत्वादिति॰ फलस्यव्यपदेशिवद्भावेनकर्मत्वात् धातुमात्रस्यतदुपस्था

पकत्वात् त्वमते संख्यासत्वाच्च सर्वत्र छिन्तीयाप्राप्तेरिति भावः क्वचित्तस्य करणत्वेनान्वयविवक्षायां ज्योतिष्टोमेन यजेतेत्यादौ हरि
त्वमेच्चेदित्यादौ च हेतुत्वेन तृतीयाप्राप्तिर्बोध्या इदं तु चिंत्यम्· संख्यामात्रविवक्षायां कालसाधनादेरविवक्षायां तिङादेरप्राप्तौ सुपो वा
रणाय स आवश्यक इति· ननु वर्तमानकालिकैककर्तृकपाकसमूह इत्यर्थे पचतीत्यादावणादिव्याप्त्यर्थः सोऽत आह· तस्येति·
ननु तस्येत्यादेः न षष्ठ्यंतादित्यर्थः किंतु तत्संबंधीत्यादिः एवं च तिङंतादणादिः प्राप्नोत्येवेत्यत आह· ज्ञापकेति· तिङंतात्तद्धित
स्येत्तरवादिरेवेति नियमद्वारेति भावः एतेन वा इत्तुथात्तुस्यशेखरविरोध इत्यपास्तम्· वाक्यादंत्यंतस्वार्थिकनिरासाय तदितिचिं
त्यमिदमिति वदंति· सुबंतस्योपस्थितत्वसिद्धये हेतुद्वयमाह॥ स्वार्थेति॥ तस्येति च· बोध्येति· अत्र च विद्यमानसेतिवक्ष्यमाण
वत्तंत्रं बोध्यम्· प्रथमोच्चारितबोध्यादिति॥ प्रथमोच्चारितं बोध्यं वाच्यं यस्येति च तदर्थः। बोध्यबोधकादिति यावत्· अन्यथा श्रुतौ
पीति न्यायेन बोध्यादुपस्थादेरर्थान्तप्रत्ययस्य बाधादसंगतिः स्पष्टैवात द्वोध्यबोधकं च सुबंतमेवेति तस्योपस्थितत्वमिति
भावः॥ ॥घटकत्तयोपस्थितप्रातिपदिकत्वविशेषणत्वाभावायाह प्राधान्येति· न दोष इति· यद्यपि प्रकृते सर्वस्य सुपीत्य
स्यप्रवृत्त्या प्रातिपदिकत्वमपि न तथाप्युपलक्षणं तदिति भावः॥ ङ्याद्यादि पाठं प्रमाणयन्नाह· स्पष्टं चेति· अत एव सर्वैतितात्रतदंतसप्तमीत्वादे
वेत्यर्थः। अन्यथा बहुव्रीहिकाले नोदात्तत्वात्तस्यैव पूर्वपदप्रकृतिस्वरेणेति देशः स्यात्· धर्मिग्राहकमानान्न्यायसंकोचादेवेति तु नात्त

स॰भ॰ ८५

एवंचस्यार्थः। तदसंकोचेपि पूर्वं लुकि अन्तरंगत्वात्सर्वे स्वरे प्रकृतिस्वरेणान्तत्वसिद्धेः। कुमारेत्यादि धर्मिग्राहकस्य भाष्ये साक्षादनुपलंभादु
दाहरणं प्रमाणयति॰ बहुतरेति॰ नन्वयस्कुंभीत्युदाहृते॰ प्रातिपदिकरूपेण कुंभत्वादिना ग्रहणे प्रवृत्तिलाभेपि तद्व्याप्य बहुव्रीहित्वादिना
ग्रहणे प्रवृत्तिर्नस्यादत आह स्त्रीप्रत्ययेति॰ तद्ग्रहिते॰ दृष्टाद्वृत्तिशेषः तद्ग्रहितत्वं च तत्प्रकृतिभूतमेव॰ अत एव नद्युत्तरपदग्रहादित्यर्थेप्युत्त
रपदत्वस्य विशिष्टेतिर्देशात्॰ कच्छ्यादिन्यपालम्॰ उत्तरपदत्वस्य प्रकृतौ दृष्टत्वाभावात्॰ एतत्ध्वननायैव समभिव्याहारइति॥ अन्य
थातद्धिफलमेवस्यात्॰ विशिष्टेति॰ तन्मात्रविशिष्टे॰ एतेन दृष्टयामाल यादृत्यत्र न तत्कृतो मालेदृष्टप्रातिपदिकत्वस्य दृष्टामालादृ
तिविशिष्टे॰ निर्देशात्प्रातिपदिकावयवत्वेन लुक्स्यात्॰ इत्यपास्तमिति केचित्॰ पाठकगंधेउत्तरमिति तत्त्वम्॰ वस्तुतस्तु समासांता
नामलौकिके प्रवृत्त्यात त्र च सुपः सत्त्वात्नदीचरमावयवकत्वं वाधितमतो न ग्यन्तप्रकृतिकसुबन्तोत्तरपदकइत्यर्थो वोध्यः॥ ॥
इत्यादेः सिद्धिरिति॰ आदिना युवतिकायाः अन्यथांतरंगत्वादेव ङ्याप्पोर्पूर्वं लुत्वादेसिद्धेःस्त्रीप्रत्ययांताच्चेतद्ङ्या वन्नादेवेत्तिनिय
मार्थत्वापत्त्यात् ऊङः पूर्वमनुत्पत्त्या वसिद्धिःस्यात्॰ मानं तु प्रत्याख्यानपरं भाष्यमेव। एतच्चेति। ङ्याप्ग्रहणासम्बन्धइतीति प्रत्ययाद्यन्तनी राम॰
त्यादिनाऽत्यंतस्वार्थिकपरिग्रहः यूनीतिरिति। उक्तार्थेति न्यायस्तु स्त्रीप्रत्ययप्रकरणेनेति प्रत्ययारंभादुध्यतइतिभावः॥ एवं चेति॰ ८५
लक्ष्यानुरोधेन तस्य तदन्यपरत्वे चेत्यर्थः॥ आरभ्येत्यनेन समासांतपरिग्रहः पठितेष्विति शेषः॥ व्याख्यानादिति ङ्याप्ग्रहणस्यस्त्री

प्रत्ययमात्रोपलक्षणात्वस्य प्रत्याख्यानानुरोधेनावश्यकत्वेन तद्धितान्तद्धितस्येव तेन ग्रहणमिति सूत्रमतेपि यूनस्तिरित्यत्र तदसं
बंधः अत्यंतस्वार्थिकादिषु तु तेषामतिरिक्तार्थाभावेन परिपूर्णमिति न्यायाविषयतयास्तु वन्ता तद्धितवदतिसिद्धं तस्य ङ्याापोः प्राक्
प्रवृत्तेश्चाभावात्तदसंबंधः न्यायसिद्धेऽर्थे सम्मतिमप्याह। सर्वस्येति। तत्र भाष्येऽउक्तार्थासंस्पर्शादाह। कैयट इति। अत्र केचित्प्रत्यव-
तिष्ठंते तत्र हि भाष्ये पदग्रहणं कर्तव्यं समासनिवृत्त्यर्थं सप्तपर्ण इत्युक्तं यदा सप्तसंख्याकपर्णविशिष्टो वृक्षः एकत्वादिसंख्या-
नालिङ्गितः वीप्स्यते तदा वीप्साविषयव्याप्तिबोधसमये वृक्षगतैकत्वस्याननुभवाद्द्विर्भवनोत्पत्तेः प्रागेव समासस्य प्राप्तिरपवादः-
त्वान्न भवति। कृते स्वादौ पदत्वेपि तदर्थसंख्यालिंगितार्थे वीप्सितत्वाभावान्न भवति तदालिंगिते वीप्साविवक्षायां तु भवत्येव घटंप
टं पश्येति च तदभावः सप्तसंख्यानि पर्णानि वीप्स्यंते न तु तद्वान् वृक्ष इति कैयटस्तु चिंत्य एव वृक्षादेरवीप्सितत्वे विभक्त्यंतद्वयवद्द्विर्वच
नाप्रसक्त्या पदग्रहणावश्यकत्वासंगतेः ततः तद्धितनिवृत्त्यर्थं च द्विपदिकेति स्त्रीत्वद्वित्वलक्षणलिंगसंख्यान्वितः पदार्थो वीप्स्यते न
तु एकत्वाद्यालिंगित इति वीप्साविषयव्याप्तिबोधसमये एकत्वादेरननुभवात् सुबुत्पत्तेः प्राक् पूर्वोक्तत्वेन तद्धितांतस्य टाबन्तस्य-
द्विर्वचनं प्राप्नोति पदाधिकारात्तु न भवति कृते सौ हल्ङ्यादिलोपे च पदत्वेपि तदर्थकस्यैकत्वालिंगितस्यावीप्सितत्वान्न भवति तत्त्वे
तु भवत्येवेति भावः। यत्तु कैयटः स्त्रीत्वस्यापि वीप्सायामनंतर्भावमाह तन्न सम्यक् द्विपदिकाभ्यामित्यत्र प्राप्नोतीति विवक्ष्यमाणभाष्या

स॰भ॰ ८६ संगतेः नहि लिंगस्यापि वीप्सितत्वे टावन्तेस्त्वादिष्विति पदत्वेपि द्विर्वचनप्रसक्तिरस्तीति· तच्च तद्धितोत्पत्तेः प्राक् समासस्य न द्विर्वचनम
पदत्वादित्यभिप्रायकमाह· तदपि न· प्रकृतार्थस्य भाष्यानभिप्रेतत्वात्· तथा हि· तद्धितनिवृत्त्यर्थमित्यस्य तद्धितान्तनिवृत्त्यर्थमित्य
र्थः॥ नहि तदुत्पत्तेः प्राक् तदस्ति समासनिवृत्त्यर्थमित्यनेन गतार्थत्वाच्च· किंच तथाभिप्रेतत्वे हि तद्धितेनोक्तत्वान्न भवतीति· तदु
त्तरं तत्प्रत्याख्यानभाष्यासंगतिः नहि ततः प्राक् तेनोक्तत्वं संभवतीति पुनः सर्वथा निरवकाशत्वेन तद्बाधकत्वात् ततः प्राक् तदप्र
वृत्तेश्च वुनि कृतेपि तत्र कौण्डिन्यन्यायेन बाधेऽपवादे कृते उत्सर्गाप्रवृत्त्या द्वित्वं न प्राप्नोत्येवेति तथापि भाष्यमसंगतमेवेति तु न वा
च्यम् उत्सर्गे द्वित्वे कृते उक्तत्वाद्वीप्सायां वुनोऽप्राप्त्या तन्न्यायविषयाभावात्· हलङ्याब्भ्यो लोपे कृते पदत्वात्· द्विपदिकाद्वति बहु
वचनान्तं पाठ्यमिति च तदुक्तं चिन्त्यम् तत्पाठस्यापि योजितत्वात्· यत्तु विवरणे द्विपदिकेत्युत्तरं माशसन्त्युपपाठः पदग्रहणेनापि त
न्तनिवृत्तेरशक्यत्वात् प्रसंतस्यापि पदत्वात्· तत्पूर्वभागस्यापि सुवंतात् प्रसउत्पत्त्या पदत्वादित्युक्तं तत्र तत्पूर्वभागस्यापि स्वा
दिष्विति पदत्वादित्युक्तः पाठः अत्यंतस्वार्थिकानां सुवुत्पत्तेः पूर्वमुत्पत्तिरिति· पूर्वमुक्तत्वादिति। प्रकृतग्रंथार्थस्तु इत्थं द्वित्वसंख्या श॰म॰ ८६
युक्तेति स्त्रीत्वप्रयुक्तेत्यपि बोध्यम् एकत्वेति। कैयटे लिंगानन्तर्भावस्योक्तत्वेपि उक्तहेतोरेव तत्त्यागः अनंतर्भावात् सुवुत्पत्तेः प्राक्
टावन्तस्य विशेषः तस्य पदत्वाभावाद्द्विर्वचनाभावः प्रयोजनमित्यन्वयः ननु कृते तद्धिते पदत्वात्तेनोक्तत्वाद्वा द्विर्वचनाभावेपि त

दुत्पत्तेः प्राक् समासस्याकृतत्वेनेत्यत आह॰ सेति। अभावेनेति। तस्याः संख्यापेक्षत्वे नवहिरंगत्वात्तद्धितस्य च स्वार्थिकत्वेनांतरंगत्वा
त्तेन बाधारितिभावः। यद्यपि वुनो बाधकत्वात्तद्विषये द्विर्वचनाप्रवृत्तिरिति वक्तव्यं तथापि अपदत्वात्प्राप्तिरेव नेत्युक्तेरेवन्या
य्यत्वादेवमुक्तमिति॥ प्रत्याख्याने तु तथैव पूर्वमप्रवृत्तिरितिभावः॥ ॥ननूपजनिष्यतेति न्यायेन भत्वेन पदत्वबाधात् प्राक् तद्धि-
तोत्पत्तेः समासे कृते पदत्वाभावात् तद्भाववद्भूतिके यटः सुयोज्योऽत आह॰ पुंयोगेति। अपिना पूर्वोक्तकैयटसंग्रहः। एतेनोक्तार्थस्य
भाष्यासंसर्गः सूचितवान्। अन्यथा सूत्रेपीति वदेत्। इनुणन्तत्वरूपेति। समासविधौ हि गतित्वज्ञानं समर्थत्वज्ञानं चेति द्वयमेव॰
अणविधौ तु प्रातिपदिकत्वं समर्थत्वम् इनुणन्तत्वं चेति त्रयः अतस्तस्याधिक्यं॥ न च पदद्वयाश्रितत्वेन समासस्यापि वहिरंगत्वे
नोभयोः तयोः परत्वादण एव स्यादिति वाच्यं। सांकूटिनादिलक्ष्यानुरोधेनोक्तान्तरंगत्वस्यैव पुरस्कारादिति कैयटाशयः॥ एतेन समा
सस्यान्तरंगत्वेपि प्रतिपदोक्तत्वात् अण एव स्यादित्यपास्तम्॰ इनुणन्तनिष्ठधर्मे च योपस्थितावण्विध्युपस्थित्याऽण्विधेर्विलंबोप-
स्थितिकत्वात्प्रत्युत तन्निष्ठावश्यकसमर्थत्वरूपधर्ममात्रोपस्थितौ समासविध्युपस्थित्यात्तस्यैव तत्वात्॥ ॥असंगतिरिति॥ ननु
तदन्तात्तदुत्पत्तावपि परिभाषांगीकारेण सुबुत्पत्यनन्तरं प्राप्यात्तदुत्पत्तेः प्रागेवान्तरंगत्वात्समासे तत्र स्वदुत्पत्तौ समुदायादणि
सांकूटिनसिद्धिः तदनंगीकारे तु द्वयोरपि तदुत्पत्यनन्तरं युगपत्प्राप्त्यैकपदाश्रितत्वेनान्तरंगत्वात्केवलादणि सांकोटिनमितिस्यादि

स॰भ॰ तिरित्याभाष्यस्यसुयोज्यत्वेनक्वाप्यसंगतिरितिचेन्नसत्यामप्येतस्यामवयवाद्युत्पत्तिः प्राप्नोतीतितदुत्तरभाष्यानुरोधेनास्यापिभाष्यस्यै
८७ त्काभिप्रायकत्वेनैवव्याख्येयत्वेनासंगतेस्तादवस्थ्यात्। नहिसुवंतात्तदुत्पत्तिरितिनियमेऽवयवात्तदुत्पत्तिः प्राप्नोतीत्यवयवस्यतत्वा
भावाद्येनननु भाष्यंसंगतंस्यात्। इदंप्राचामनुरोधेन। वस्तुतः संबस्कारेत्यादौसुट इवांतरंगात्तदार्थकगतिनिमित्तकत्वेनसमास-
स्यान्तरंगत्वंबोध्यमुक्तदाह अन्यत्रेति एतेनतत्त्वेनतत्त्वांगीकारेस्वयंग्रंथांतरविरोधइत्यपास्तमितिकेचित्। स्वौजसमं॰ इन्द्र इति।
जसादौरुत्वंसौत्रत्वान्नेतिभावः। वस्तुतस्तिपू तसूझीत्यत्र वक्ष्यमाणरीत्यालाघवेननिर्विभक्तिकानुकरणभूतानिछपकूपदान्येवे
त्यरुत्वंन्याय्यमेवेतिबोध्यम्॥ विभक्तिश्च। नन्वेवंत्रीणित्रीणीत्यस्यानुवृत्तौअष्टत्वप्राचीत्यादौनिर्वाहेपिप्रथमयोरित्यादौदोषो
ऽतआहप्रथमेति। वाच्ययोरित्यत्रत्रिकयोरितिशेषः॥ व्याख्यानादित्यस्यार्थमाह॥ अन्यथेति॥ औजसोरिति॥ स्वाद्योरिति तुनो-
क्तं। जसव्याहत्यर्थकान्तादिचीतिदूचूमहाम्सोरजादित्वंतुज्ञानंशिवोऽर्थ्यदत्यत्रबोध्यम्। तस्मात्तुसइतिलिंगमप्यत्रबो-
ध्यम्॥ सुपूसंज्ञेति। तिङ्संज्ञाप्येवमेव तदंतात्मरवायापत्तेः॥ ॥रामइहेत्यादौनिघातापत्तेश्च। दीर्घापत्तेरिति। सन्निपातपरिभाषयादी रा॰मं॰
र्घवारणेतुसर्वदेत्यादौसर्वस्यसुपीत्याद्युदात्तत्वापत्तिर्बोध्येत्यन्यत्रविस्तरः॥ बहुषु नग्रहणमिति। तेनवहुः पर्वतइत्यादौन नचात्रपरत्वा ८७
देकवचनंस्यादितिवाच्यम्। तस्यौत्सर्गिकत्वेनतस्यतदपवादत्वादितिवदंति॥ कंशाद्यपिद्वव्यवहारस्यप्राबल्यमितिध्वनयितुमाह

भर्तृदारेति अयं स्मार्तप्रयोगः अंत्यः शाबरभाष्यीयः। हृत्येदूति सुबंततयेति हेतौ तृतीया सुबंतताहेतुकं यत्पदत्वं तदेकदेशावकृत
न्यायेन कृत हृत्येदूत्यर्थः यथाश्रुतं तु न साधु तेन न्यायेन विकृतावयवनिबंधनकार्यस्यानतिदेशात् ममहेतूपादानं तूपदेशप्रवृत्तिंद्या
तनाय इदं च पक्षद्वयेपि बोध्यम् अग्नीडुत्यत्र वरुणत्वस्यासिद्धत्वात् सुबुद्ध्या प्रवृत्त्या पुनः परत्वमित्यादि प्रागुक्तं च न विस्मर्तव्यं सरूप
विभक्त्यंतानां सरूपाणामेकशेष इत्यर्थ इति पक्षसाधारण्यं फलं वक्तुमाह भ्यामीति यद्यप्येवकारापकर्षाभावेपि लक्षणत्वस्यातिप्रसं
गमात्रं भ्यामीति सिद्धांतपक्षे त्वौजसादावपि तद्व्यावृत्तिः फलं बोध्यं ध्वनितं चेदं भ्यामादावपीत्युक्त्या रहति॥ तद्धिताद्वावितिः आदिना
काड्डूहारितं हारिणं ह्रिणीयते हरितायते इत्यत्र। ननु सत्यप्येवकारापकर्षे मातृमात्रोरेकशेषो दुर्वारः अलौकिके औजसादावपि सारू
प्यादत आह लौकिकेति यद्यपि विरूपाणीमेत्यर्थपर्यवसानात् लौकिके च वैरूप्यात् तत्र सप्तुवार एव तथापि अन्यतरौ यं लौकि-
कम् अपरो यमलौकिकमादायाव्याप्तिवारणं शेषफलं बोध्यमिति वदंति अत्रावैरूप्यमपि प्रातिपदिकांश एव तेन संज्ञा सर्वना
म्नोः प्रथमायोरेकशेषः अन्यथा जसि प्रथमे प्रथमा इति वैरूप्यान्न स्यादिति बोध्यमित्यन्ये॥ ॥ नन्वेकशेषस्य सहविवक्षाविषयत्वेक
प्यमन्यत्र तदुक्तिरत आह द्विर्वचनेति स्पष्टार्थमिति सूत्रारंभसामर्थ्यात् वक्ष्यमाणोत्तरार्थस्यापि बोधयितुं शक्यत्वेन वक्ष्यमाणए
वार्थ इति स्पष्टतया बोधनार्थ मित्यर्थः। एकस्यामपीति। समामार्यामित्यर्थः। बोधयितुमिति अन्यथा चालनीन्यायेन भिन्नवि-

स॰भ॰ ८८ भक्तौ वैरूप्यमादाया संभवः स्यात्· रामौ रामाभ्यां स्वसा स्वसारौ इत्यादौ भिन्नविभक्तौ सर्वत्र वैरूप्यस्य सत्त्वादिति भावः॥ नैकशेषइति· तेन
वृद्धो यूनेत्यादि विरूपैकशेषस्य लक्ष्ये गार्ग्यौ गार्ग्येइत्यादौ समाहारे एकशेषेण गार्ग्यइत्येकवचनं न विभक्त्यंतमंत्रं तु न वैरूप्यात् सरू
पैकशेषस्य नेत्तु तंत्रेण रामइत्यस्य द्विवीरत्वात्॥ ॥अन्यतरस्यामित्यनेनेति। फलसेनेति वार्तिकस्य विकल्पे नैकविधायकत्वोक्तेः। आ
प्विकादाव प्राप्तैकवद्भावविधानार्थमिति न वाच्यम्· ननु तस्य विधित्वेपि अबहुप्रकृतिकआप्विकादिद्वंद्वस्य द्वंद्वश्चेति नित्यैकत्वे प्राप्ते
विकल्पार्थमिदमिति कथं ज्ञापकत्वमिति चेन्न तेन प्रकरणेन समाहारगतैकत्वानुवादात्· तत्र द्वंद्ववाच्यसमाहारे वर्तिपदार्थगतसं-
ख्यायोगाभावेपि एकशेषवाच्यसमाहारे तदभावे बीजाभावात्· ननु ज्ञापकेन समाहारे एकशेषाभावेपि द्वंद्वे घटघटमिति स्यादेवातः-
सामान्यतो ज्ञाप्यशरीरमाह समाहारे वृत्त्यभावेति· लुप्तेति। शेषशब्दस्य कर्मसाधनत्वे लुप्तस्वं तं भावसाधनत्वे तु लुप्तङ· संतम्· अत
एवावस्थानमिति व्याख्यानं संगच्छते न च भावसाधनत्वे आकडारेति सूत्रस्थभाष्यविरोधः तत्र हि एके ति संबंधादेकग्रहणमत्र त्यंप्र
त्याख्यानमिति वाच्यं भावसाधने शेषशब्दे विभक्तिविपरिणामेनेति विवरणेनैव समाधानात् तत्र एकपदार्थे श्रूयमाणेति अस्य फ राम॰
लं युष्मदीति सूत्रे स्फुटीभविष्यति॥ द्विबह्वोरिति· संख्यापरत्वात्साधुत्वम्· अंशाविशिष्टोदात्तकत्वे सति अंशाविशिष्टानुदात्तकत्वं ग ८८
दीतोदात्तानुदात्तयुक्तोपि स्यादेवेत्यत आह कदाचिदिति ह्युदात्तवत्त्वेति। ह्यनुदात्तवत्त्वं तावच्छब्दो यस्य तत्त्वं कर्मधारयेतु मतुपू न स्या

तूउदात्तशब्दो धर्मिपरः तस्यैव ग्रहणे मानाभावादिमं गृहीत्वा स्यादेव दोषः स्वरभिन्नेति तृतीयासमासः दशान्तेति अष्टादशान्त्यवृत्य
र्थः अग्रे एकोनविंशत्यादावित्ति बोध्यम् एकादशादित्यागे बीजाभावादित्यन्ये एकशेषेति एकश्च एकश्च दश च दश चेत्यादावितिभा
वः अत्र द्वन्द्वानभिधानं सरूपे विरूपे तु द्वादशादावस्यैव अत एव विरूपसंख्यावाचिद्वन्द्वानभिधानप्रतिपादके त्यदादितः शेषे पुन
पुंसकेत्यत्र शेखरे नवानां तानामित्येव पाठः ॥ विंशत्यादौ त्विति ॥ संख्यापरिच्छिन्नसमुदायपराणां न तु संख्येयमात्रपराणां ब्राह्मणानां—
विंशतीरित्यादौ विंशतिसंख्यावच्छिन्नौ द्वौ समुदायौ इत्यर्थे प्रतीतेः विंशतिर्घटा इत्युक्ते चत्वारिंशतामप्रतीतेः ॥ चुटू चुटुषः प्रत्ययस्ये
तिवाच्ये योगविभागादस्यानित्यत्वेन चुंचुवादौ नेत्त्वमिति प्रकारस्य भाष्यानुक्तत्वेनायुक्तत्वं ध्वनयन्नाह। यादित्वेत्त्रिटीट चोप्येवमे
वेत्वाभावद्धति बोध्यम् असिद्धत्वाच्च नोत्यत्वमिति पूर्ववत् बहिरंगासिद्धत्वादिति भावः ॥ ननु सूत्रे चकारस्तु एव बलपरत्वात् तत्प्रवृत्त्याव
पिप्रयोगे तु इत्संज्ञालोपाभ्यामेव तन्निवृत्तिर्वाच्येति कथं नोत्यमिति चेन्न व्यवस्थितान्त्यत्वाभावात् नन्वंतरानित्यस्य प्रतिपक्षिणि वाच्ये
तितथोक्तिरयुक्ता अत आह अनन्तरापेक्षयेति एङ्ह्रस्वात् पंचम्यं तद्धृति नन्वेवमपि कतरदित्यादावतिव्याप्तिर्दुर्वारैव यस्मात् कत्त
रशब्दात्संबुद्धिर्विहितास्मादिर्ये स्याद्डादेशाकारविशिष्टस्य तस्य च ह्रस्वांतस्त्तरादित्वेन ततः परस्यादकारस्य संबुध्यैव यवहल्लुत्वे
नेति चेन्न। परिभाषायां तदादिपदे बहुव्रीहिसत्वेपि विहितप्रत्ययप्रागभाव एव गृह्यते प्रत्ययेङ्गमित्युत्तरसूत्रे तस्यैव संभवेनार्थो—

स॰भ॰
९०

पिवर्णमात्रनिमित्तकत्वेनान्तरङ्गत्वमपीति उभयोरन्तरङ्गयोः परत्वाद्गुण एव स्यादत आह ऽङ्गाधीनेति एवं च तस्य तन्मात्रनिमित्त
कत्वमिति भावः। एकग्रहणेति स्थानिवदादिषु तु गुणित्वाद्वृद्धिप्राप्तिरिति भावः सामर्थ्यादेवात्रेति मत्वाहारग्रहणस्येति भावः ननु रामाद्यौ
ह च ग्रहणस्य साफल्याज्ञौ यौद्दैत याय वार्येनात आह गुणेति अत एव ह्रस्वांशे तदप्राप्तेरेव॥ असमवत्त्वेन परत्वासम्भवादाह
ऽप्यसुचेति॥ ॥अनवकाशेति येन नेति न्यायेनोत्सर्गप्रवृत्त्युत्तरमचारितार्थ्येपि बाधः। तदप्राप्ति योग्ये त्वत्र योग्यतावर्जमाने वेति
मागृहदिति च भावः। ह्रस्वस्य गुणे इत्यदोपस्थित्या रामेत्यत्र न तदप्राप्त्या लोपस्य नानवकाशत्वमिति बोध्यं द्विमात्रेति कुमारीत्यादौ
त्रिमात्रार्थं चेत्यर्थः वाच्छन्दसीत्यत्रानुवृत्त्यर्थं च दीर्घकृते परत्वाभावादाह विहितेति यद्यपि सकाररूपावयवविशेषणत्वेनासं
भवः सुपरिहरस्तथापि सुपुरुषास्त्रियदूत्येतद्व्यावृत्तये तदुक्तमिति बोध्यम् एतानिति ऽकः परो यः शस्तस्य नदूत्यर्थेनादेः परस्ये
त्यकारस्य नेत्सुपि चेति दीर्घे संयोगान्तलोपे रामानिति सिद्धावपि हरीनिति न सिध्येत् तदर्थमङ्गात्तसो विहितस्येत्यर्थे तु येन नेति न्या
येन दीर्घबाधापत्तिः एतेन तु मिसंयोगान्तलोपे तु किं संयोगादिलोपे वा न दूषणमित्यपास्तं पञ्चमीसमासेन स्थानिवत्त्वाद्दीर्घोत्तरमपि तु मा
देः प्राग्यात्कौण्डिन्यन्यायप्रवृत्तेः सुवचत्वात् वस्तुतः पूर्वसवर्णदीर्घोत्तरं तु सस्य शादेः परस्य शसावयवस्येत्यर्थो न्याय्यः विहितेति तु रा॰म॰
फलितार्थकथनपरं द्वितीयत्तदं तविधिप्राप्तानि प्रसंगभंगायवेत्ति बोध्यम् ऽट्कुप्वर्याणाद्वेति व्यवधायकस्य पदस्य यात्वाऽप्रयाति ९०

रिक्ततद्धितभिन्नपरत्वे इतिवक्ष्यमाणस्यणत्वाश्रयप्रत्ययातिरिक्तेत्यर्थः॥प्रत्याख्यानेनफलाभेदायेतिनिषेधप्राप्तिरस्त्वेतिबोध्यम्॥योगार्थ
स्येषत्स्पृष्टत्वकोतिप्रसंगाद्दूषयितुमाह तत्रानुस्वारेत्यादिना॥ ॥उरःकेति॥उरसिकं यस्य उरःकायत्नीतिवाविग्रहः अन्येनव्यवेति उक्तयुक्त्यनंगीकारे
यमर्थोनस्यात् न्यासेनसिद्धेइति नचचुटुतुइत्याद्युक्तौ मन्तेत्यादावविवादर्शने त्यादावपिणत्वंवारितंस्यादेवंचादर्शनेत्यत्र णत्वसिद्ध्यर्थमेवतयानो
क्तमितिकुतोनस्यादितिवाच्यं चुटुतुएवमुक्तावपिरषाभ्यामितिपंचमीनिर्देशात् व्यवधानमात्रेप्राप्तोणत्वैरेवव्यवधानेभवति॥आदर्शनेत्यत्राडा-
दिसहितव्यवधानेनभवत्येवेतिनियममुखेनवक्तुंशक्यत्वादितिआहुः॥यद्वाशब्दव्यवायेनेतिशेषभाष्यस्थनवर्गाद्यनुक्त्याउपलक्षणत्तयैवोद
धेतिव्याख्यानत्वेनमात्रपदविशिष्टन्यासेपितात्पर्यंबोध्यं न्यासश्चनिषेधप्रकरणेसचेत्यंनभूइतिप्रकरणेपदेनव्यवायेचुटुतुलशर्मात्रेणति
विधिप्रकरणेचरषाभ्यामित्यस्यानन्तरम् आङ इतिपंचम्यंतस्यअधिकारः कार्यःशरचू अयोगवाहभिन्नसुसाहचर्यात्तेनक्रिमिशब्दादा
चक्षाणणिजंतात्क्विपिशब्दपरात् शब्देनषष्ठीसमासेशसिअल्लोपेकृणः पश्येत्यत्रशरा व्यवायात्णत्वंनस्यादितिफलभेदोनअत्रन्यासेएको
नविंशतिमात्राःविंशतिर्वायथान्यासेसप्तदशमात्राः तुमुग्रहणत्यागेपञ्चदशवाइत्तिगौरवमभिप्रेत्यगुरुन्यासेत्युक्तमाद्येकल्पेतुमत्रपदाभावेनपञ्च
दशतास्तथापिगुर्वित्यस्यलघुभिन्नेत्यर्थेइतिनदोषःप्रतिपत्तिगौरवादस्यैकदेशयुक्तित्वम्॥प्राप्तिरेवनेति नतुनिषेधमुखेनप्रवृत्तिरितिपक्षे व्यवायेणत्वं
भवतिअडादिभिन्नैरक्षरसमाम्नायिकैर्व्यवायेनेत्यर्थात् प्राप्तिरेवनेति स्वसिद्धांतभूतेविधिमुखेनप्रवृत्तिरितिपक्षेतु आक्षरसमाम्नायिकातिरिक्तैः व्यवायेणत्वंभ

यभावेन कथं तदाक्षेपं वदेदिति चेन्न । अंगस्येत्यस्याभावेपि ह्रस्वादंगादिणःषीध्वमित्याद्यर्थमंगसंज्ञाया आवश्यकत्वात् । अंगपदेन
प्रकृतेर्विवक्षणाच्च दिगिति । अनुमितस्य शाब्दत्वयित्वाभावाद्विशेष्यविशेषणभावनिबंधनतदंतविधेरलाभादित्यर्थः । परत्वात्पूर्वंति–
लोपे अपरनिमित्तकत्वेनांतरंगत्वोद्भावनं तु प्रतिपदोक्तत्वमस्य बोध्यम् । ननु तवापि हलि संबुध्यवयवत्वस्यापि संबुद्धित्वं न स्वांतें अ
त्वमित्युभयत्राप्याश्रयणमेवेति तन्न तदभावे कथं सिद्धिरत आह तत्स्वीकारेपीति ममतु पौर्वापर्येनापेक्षितमिति भावः ॥ ननु स्थानिद्व
यरूपातिदेशेन तत्संभवोऽत आह तादृप्येति एतदर्थमेवेत्यस्यार्थमाह यस्येति असाधारणत्वनिवेशवादिमूलकत्वमतेनयंक
ते मात्रनिष्ठेति प्रत्याहारपरामर्शवेलायां लोपश्चबलवत्तरइत्युक्तेरुकारनिवृत्त्यातस्य तन्निष्ठत्वमिति भावः अंत्यपदस्य सार्थक्ये
लक्षणानंगिकर्तृत्वद्वीत्येव समाधत्ते विशिष्टेसत्वेनेति । त्वन्मते हलुकारीत्यामध्यगानुबंधनिवृत्तावपिकः सुपइत्यादिनिर्देशान्यथानुपप
त्या आद्यंतपदपरामर्शयोग्ययोः प्रागनिवृत्तिरित्यस्यावश्यं वक्तव्यतयास्वपदेन विशिष्टस्यैव परामर्शात्तस्य विशिष्टे सत्त्वमिति भावः
॥ विशिष्टस्यैवोद्देश्यत्वेनेति एवंच प्रकृतेऽसूवृत्तित्वेपि तस्य नतन्मात्रवृत्तित्वमिति रुत्वस्यैवातिदेशो भवत्येवेति भावः ॥ तस्य संबु
द्धिलोपस्य अनल्विधित्वात् स्थानिसंबंध्यल्मात्रनिष्ठधर्माश्रितविधित्वाभावादित्यर्थः स्वमतेपि सोरमित्युक्तत्वादनल्वृत्तिध
र्मत्वेन स्थानितावद्वृत्तिकत्वादिद्त्ववदतिदेशो भवत्येवेति बोध्यम् ननु गुणस्य परनिमित्तकत्वेन बहिरंगत्ववत् प्रकृतिप्रत्ययसंबं

स॰भ॰ ८९ धिकारानुरोधात् तथाविधस्य च प्रकृते ह्रस्वान्तत्वाभावात् हलश्च ततः परत्वाभावात् अत एव तत्र तत्र प्रत्ययग्रहणे शब्दस्वरूपं विशे
ष्यमादाय तदन्तविधिरित्युच्यते उक्तार्थकतदादिपदस्य प्रत्ययान्तेन सामानाधिकरण्यासंभवेन तस्य विशेष्यत्वासंभवात् नन्वेवं प्रदे
शेन तस्य कथं सामानाधिकरण्यमिति चेदन्वयादिबाधेन शब्दाधिकारस्वीकारादिति गृहाण यद्वोपस्थाप्य तदादिपदेऽर्थवानेवा-
न्यपदार्थः अर्थाधिकारादिति न क्वापि दोषशंकालेशः विकरणांतस्याप्यर्थवत्त्वमस्त्येव कतरदित्यत्र तु दकाररहितस्य नेति प्रकृ
तसूत्रस्य भाष्यमपीह मानं तत्र हि विहितविशेषणं ह्रस्वग्रहणं यस्माद्ध्रस्वात्संबुद्धिर्विहितेति विधीयते स्माद्विहितं वा हलकोदपाद्या
नेनिष्ठा ह्रस्वपदं तद्विशेषणं ततस्तदंतविधिः यस्मात्संबुद्धिर्विहिता तस्माद्ध्रस्वान्तात्परः संबुद्धेर्हल् लुप्यते इति सूत्रार्थः यथाश्रुतं तु नयु
क्तम् हे राम हे सहे गौरि त्यादावव्याप्तेः तदादीत्यस्योक्तार्थकत्वं ध्वनयितुं विहितेति प्रकृताभिप्रायकमुक्तमिति दिक्॥ ॥स्पष्टमिति।
अयमेवात्राक्षेपपदार्थः एङादेस्तद्विशेषणात्तदंतविधिः अत एवात्रांगसंज्ञासूत्रानुपन्यासः न च प्रकृतिमंतरा प्रत्ययानुत्पत्त्या ते
न तदुत्पत्तिर्भवत्येवातः आह किं चेति नतु रात्रिभुक्तिरपि पीनत्वजनिकेवेति तत्रापि तज्ज्ञाने तदनपेक्षत्वमेवात आह शास्त्रेइति दि- राम॰
वाभुंजानत्वे सति पीनत्वमित्यर्थस्य तादृशानुमितिं विनापि विरोधग्रस्तत्वात् तत्र लोके संभवत्येवस्तः प्रकृते तु न तथागमकमिति भावः। न ८९
नु तदादेः परमेकवचनं संबुद्धिरित्यर्थो ज्ञानेपि अपेक्षैवात आह अत एवेति॥ न त्वंगाक्षेपेणेति नन्वंगाधिकाराभावेऽङ्गसंज्ञासूत्रस्या

स॰भ॰ वति अडादिभिन्नैरक्षरसमाम्नायिकैर्व्यवाये नेत्यर्थात्। प्राप्तिरेव नेति। स्वसिद्धान्तभूते विधिमुखेन प्रवृत्तिरिति पक्षे तु आक्षरसमाम्नायिका
९१ तिरिक्तैः व्यवाये णत्वं भवति। अडादिभिर्व्यवायेणत्वं भवतीत्येव ॥ अर्थात्तस्य चात्र सत्त्वात्प्राप्तिरस्त्येव किंच व्यवायेपीत्यनेन कुशेनेत्यादौ णत्वा
पत्तिरनाक्षरसमाम्नायिकाऽऽत्मत्वाव्यवायसत्त्वादिति चेन्न अट्कुप्वाङ्नुम्व्यवायेपि पूर्वत्र व्यवायेपीत्यपकृष्यते रषाभ्यामव्यवहितपर
स्य अडादिव्यवायेण इत्यर्थात्। रषाभ्यामव्यवहितपरस्यानाक्षरसमाम्नायिकव्यवाये इत्यर्थात्। चैव्यवायेपीति सूत्रे पूर्वसूत्रानुवृत्त्या
मृगेणेत्यादौ न दोषः पूर्वोक्तवार्तिकमतेप्येवं सत्त्वे न तदाप्तिनिविशेषोपादानकथनमिति तु चिन्त्यं प्रत्याख्यानेति न्यायप्रवृत्तौ तु फलभेदात् न
स्यादिति भावः॥ ॥तस्मात्प्रगुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते प्रधानस्योपकारे हि तथाभूयसि वर्तते इति न्यायशरीरं यस्मात्प्रकृतेयः
प्रत्ययो विधीयते तदाद्यन्तयोपश्लिष्टं तदादि अंगमित्यर्थेन सिद्धेपरिभाषोपस्थितिर्मुधा परनिमित्तकत्वं तु परसमीपान्नाप्य सत्ताकत्वेन सुलभ
मिति तु न वाच्यं वक्ष्यते असिद्धत्वेनेति स्थानिवत्त्वं तु नोक्तम् पदसंस्कारे आदिष्टादचः पूर्वत्वात्। वाक्यसंस्कारेपि लोपे तत्प्राप्ता वपि इयङि
न पदान्तेति निषेधात् नातिरिक्तेति विकारस्कृतमतिरिक्तत्वं तु न तेन जहि विंशकादवसिद्धत्वं स्पष्टं चेदमुद्द्योते यत्तु शब्दरत्नमनूद्यो- रामः
पाततोऽव्यापकधर्मावच्छिन्नेत्यादिनाक्लिश्यन्ते तन्मुधैव व्यतिरिक्तस्यैवाभावेन दोषलेशाभावात्॥ ननु समानाश्रयत्वमसिद्धत्वा ९१
श्रयशास्त्रसंबंधि निमित्तान्यूनानतिरिक्तकार्यिनिमित्तान्यतरकत्वमित्येवास्तु मास्तु च विधिग्रहणमत आह॥ भनक्तीति। न च

सिद्धांतेपिमिदचइतिविधानमाश्रित्यांगात्वंदुर्वोरमितिवाच्यम् तेनाचः परत्वस्याज्ञानस्यज्ञापनेपिप्रत्ययस्यापूर्वबोधनाभावात्। अतए
वभनक्तीतिभाष्यप्रत्युक्तं भूसुवोरित्यत्रत्तिङीत्यनुवृत्त्याऽग्ने मुगितिसूत्रेभाष्येस्पष्टत्वयादीर्घवारणेत्तुस्त्रीईपश्यतीत्यत्रैव स्त्रीशब्दस्य
चसंज्ञापत्तिर्बोध्या ननुविकरणान्तेदीर्घआरंभसामर्थ्यात्सिद्धः नचयायामीत्यादौयङ्लुगंतेपुत्रीयामिवोभूयामहेचि॰ कीर्षामीत्यत्रश
वेकादेशस्यांतवत्त्वेनांगत्वेचचरितार्थइतिवाच्यम् आद्यस्यछन्दोविषयत्वात् अन्येषुतुक्वदतिङ्सूत्रीयभाष्यरीत्याशवेकादेश
स्यस्थानिवत्त्वात् प्राप्तिरेवनेत्यतआह॥ करोमीति॰ उद्द्योतीयफलप्रदर्शनमप्युक्तरीत्याऽसूचिगतंबोध्यम्॰ ननुप्रत्ययेङ्गमि
तीयत्नैवसिद्धेपदत्रयकरणाद्विहितपदाध्याहारेविधिग्रहणंमुधैवेतिचेन्न॥प्रत्यासत्तिप्रतिबंधेनप्रत्ययभेदस्यवप्रवर्तनेन-
चारितार्थ्यसंभवात् पदत्रयस्यफलंतुहरिर्भवामीत्यत्रदीर्घः केवलेनेतिबोध्यम् टाङसि॰ अंगाधिकारेपाठोव्यर्थःस्यादिति॰ उ
क्तलक्ष्यसिध्यर्थमावश्यकपरिभाषाद्वयसंचारेणैवानंगादंतसटेत्यादिव्यावृत्तौसिद्धायांविभक्तिविपरिणामेनात्रव्याख्यानंतव
निष्फलंस्यादितिभावः॥अंगनिमित्तेत्यर्थेतुनतयोरावश्यकसंचारकत्वम् संचारेतुपाठोनकार्यइतिस्पष्टंभाष्ये॰ एतेनतेआश्रित्यपाठवैयर्थ्य
स्यभाष्येसिद्धांतेतितत्त्वेनतदापादनमसंगतंस्यादित्यपास्तम्॥ङेर्यः॥संप्रसारणेइत्यादिनिर्देशस्योभयोरग्रहेज्ञापकत्वसंभवेपिसंप्रसारण
इतिपररूपेणाचतुर्थ्यन्तमेव कष्टायेति सप्तम्यंतमेवेत्यपिवक्तुंशक्यत्वेनसप्तम्याएवग्रहाभावेनतत्त्वासंभवादाह व्याख्यानेति नचसर्व

सिद्धांतेपि मिदंचइति विधानमाश्रित्यांगत्वं दुर्वारमिति वाच्यम् तेनाचः परत्वस्याज्ञातस्य ज्ञापनेपि प्रत्ययस्यापूर्वबोधनाभावात्। अत ए
व भनक्तीति भाष्ये प्रत्युक्तं भूसुवोरित्यत्र तिङीत्यनुवृत्त्या आने मुगिति सूत्रे भाष्ये स्पष्टत्वात् यादीर्घवारणेनुस्त्रीई पश्यतीत्यत्रैव स्त्रीशब्दस्य
च संज्ञापत्तिर्बोध्या ननु विकरणान्ते दीर्घ आरंभसामर्थ्यात्सिद्धः नचयायामीत्यादौ यङ्लुगंते पुत्रीयामि वो भूयामहे चि· कीर्षामीत्यत्र श
विकादेशस्यांतवत्त्वेनांगत्वेचचरितार्थइति वाच्यम् आद्यस्य छन्दोविषयत्वात् अन्येषु तु रुदतिङ् सूत्रीयभाष्यरीत्याश्वेकादेश
स्य स्थानिवत्त्वात् प्राप्तिरेवनेत्यत आह॥ करोमीति· उद्द्योतीयफलप्रदर्शनमप्युक्तरीत्याऽरुचिग्रस्तं बोध्यम् ननु प्रत्ययेङ्गमि
ती यत्नेनैव सिद्धे पदत्रयकरणाद्विहितपदाध्याहारे विधिग्रहणं मुधैवेति चेन्न॥ प्रत्यासत्तिप्रतिबंधेन प्रत्ययभेदएवप्रवर्तनेन-
चारितार्थ्यसंभवात् पदत्रयस्य फलं तु हरिर्भवामीत्यत्र दीर्घः केवलेनेति बोध्यम् टाङसि· अंगाधिकारे पाठो व्यर्थः स्यादिति· उ
क्तलक्ष्यसिध्यर्थमावश्यकपरिभाषाद्वयसंचारेणैवानंगादंतसंटेत्यादिव्यावृत्तौ सिद्धायां विभक्तिविपरिणामेनात्र व्याख्यानं तत्र व
निष्फलं स्यादिति भावः॥ अंगनिमित्ते त्यर्थे तु नतयोरावश्यकसंचारकत्वम् संचारे तु पाठो न कार्य इति स्पष्टं भाष्ये· एतेन तत्र आश्रित्य पाठवैयर्थ्य
स्य भाष्ये सिद्धांतेति तत्त्वेन तदापादनमसंगतं स्यादित्यपास्तम्॥ डेर्यः॥ संप्रसारणे इत्यादिनिर्देशस्योभयोरग्रहे ज्ञापकत्वसंभवेपि संप्रसारण
इति पररूपेणाचतुर्थ्यंतमेव कष्टायेति सप्तम्यंतमेवेत्यपि वक्तुं शक्यत्वेन सप्तम्याएवग्रहाभावेन तच्चासंभवादाह व्याख्यानेति तच्च सर्व

स॰भ॰ वृत्तौ परिनिष्ठितेरूपे विशेषः तत्र जश्त्वं प्राक् प्रवर्तते न बाध्यबाधकभावः तेन रत्नमुडादौ न दोषः अन्यथान्तरतम्यात् चर्त्वे नषस्य षए
६३ वस्यात् जश्शित्यादयः षट्त्रौ षट्च इत्यादिनिर्देशाश्चेह लिंगम्॥ एतेन णत्वं द्वित्वं च तुर्णामित्यत्र त्यस्त्वग्रंथविरोधश्चर्त्वस्य जश्त्वापवादत्वा
दित्यपास्तम् तथाहि पूर्वत्रासिद्धमद्वित्वे इत्यस्य वर्णद्वित्वे प्रवृत्तौ चर्त्वस्यासिद्धत्वात् गस्यैव द्वित्वे ऽत्यस्य चर्त्वे पूर्वत्र गश्रवणाप
त्तिरितिहि॥ तत्रोक्तं तत्र च पूर्वं जश्त्वे गकयोः श्रुतिः अपवादविषयतयान्तद्भावे कुत्वनिष्पन्नकस्य द्वित्वे करूपश्रुतिरिति परिनिष्ठि
तेवर्तते विशेषः वर्णद्वयतत्प्रवृत्तौ तु परेषामसिद्धत्वात् कुत्वे जश्त्वापवादत्वात् द्वित्वापेक्षयापरत्वाच्च चर्त्वे द्वित्वमिति प्रक्रिया
एवं गकारे जशि परे इति तदुत्तरश्लोकाग्रंथोपि न विरुध्यते द्वित्वे कृतेपीत्यर्थोभावे एकगश्रवणरूपविशेषस्य सत्त्वात् सिद्धा
न्तेतु पूर्वमेव चर्त्वमिति प्रक्रिया बोध्या त्रिपाद्यां तत्र कौंडिन्यन्यायस्तु प्रवर्तयिष्यते अहन्सूत्रे इति तत्रैव समर्थयिष्यते त्रिपाद्यां तन्न्यायप्र
वृत्तौ यत्तु भाष्यं विरुध्यते तदनित्यत्वेन समाधेयम् परं तु इदं मनोरमाकाराशयवर्णनमात्रं वस्तुतः षड्भिरिति निर्देशेनाबाधकत्वज्ञापनमेव
लघु इति दिक्॥ जश्त्वापवादत्वादिति ननु प्राचीनमतेऽभेदविवक्षा याऽपि सत्त्वेन पदत्वाभावे चर्त्वे सार्थकमिति वाच्यमिति चेन्न यदो रामः
नुनेतिवापदांतस्येति पूर्वोत्तरसाहचर्येणैतत्प्रकरणस्य पदानवयवेऽप्रवृत्तेः न्यायादिति फलाभावेपि प्रवृत्तौ बाधकाभावादिति भावः ६३
।पूर्वग्रंथेऽस्य फलविशेषाभावे प्रवृत्तौ न बाधकमित्येव तात्पर्यम् न तु तत्र प्रवृत्तौ बाधकमित्तीति न तद्विरोधः।मूले प्रयत्नभेदादिति ननु प्र

घातकत्वमहाप्रयोज्यत्वेनेह तज्ज्ञानं नहेतुरिति भावः ननु पूर्वत्रेत्यस्येवास्या अपि अन्तरंगत्वाद्बहिरंगं नेत्येवार्थ इत्यत आह किं चेति
स्थानिवत्त्वेति आनुमानिकेन संनिपातलाभ इति भावः श्रौतेन संबुद्धित्वं तु न अस्य विधित्वात् ननु दीर्घात्पुनरस्मातिदेशप्रवृत्त्या तद्भावेपि प्र
वृत्तेः प्राक्परिभाषया प्रतिबन्धे तेन निनासंगतिरिति चेन्न प्रवृत्तेः प्राग्विघातकत्वासंभवेन यत्र न हि घातकत्वं भावीत्यर्थावश्यकत्वेनाति
देशेन तद्दुष्टो न हि घातकत्वाभावात् अशास्त्रीयेति नास्य निवृत्तवदिति भावः तेनादेशप्रयुक्तवारणायतदप्रवृत्तिर्बोध्या तत्रासिद्धेति
अशास्त्रीयविघातकत्वं भावीत्यादिव्यवहारे इत्यर्थः स्पष्टं चेदमीदृक्सूत्रे प्रदीपे। बहुवचने। रामाभ्यामिति। सुपि चेति तु रामायेत्यत्र साव
काशं पर्युदासेनाकारादित्यस्याप्राप्तेः आद्यपक्षेऽपवादत्वेपि रामेभ्य इत्यसिद्धेश्च रामइति तु न प्रत्युदाहृतं रूपप्रत्ययेनैवेष्टसिद्धेः पूर्वोक्तामि
ड्वत्वबाधस्तु हलोनंतराद्रत्यादिनिर्देशाद्बोध्यः नुमापत्तेरिति पंचमीसमासेन स्थानिवत्त्वेनोभयोर्नित्ययोः परत्वान्नुमापत्तेरिति भावः अ
न्तरंगत्वात् गुणइति तु न वाच्यम् इकि तस्य अनित्यत्वेनाप्रवृत्तेः अन्यथैकोऽसिद्धत्वात्गुणो न स्यादिति यद्वा वार्णादांगस्य बली
यस्त्वात् सा चागमविषयेपि अतएव सत्तुक्निर्देशेन तदनित्यत्वज्ञापनं संगच्छते उभयोरादेशत्वेएवेति ह्रस्वइत्यत्र वक्ष्यमाणपक्षे
तु रमेइत्यादौ ह्रस्वस्य गुणइति गुणापत्तिर्बोध्या उभयोरादेशत्वात् इदं पक्षे एभ्य इत्यत्र हलि लोपानापत्तिर्बोध्या ॥ तच्छिव इत्यत्र मनो
रमाग्रंथविरोधं परिहरति इतिशेष इति यत्र तु जश्त्वचर्त्वे इति द्वंद्वे नैव शेषसंभवस्तत्र तु जश्तु अचर्त्वे इति छिंदंति यत्र पूर्वं जश्त्वप्र

स·भ· नाम्नः सौ सिनौ ङसेः स्मादित्येव सिद्धे ङिग्रहणं रूपसंप्रतिपदोक्तरूपम्॥ चेत्यन्ये उपजीव्येति न्यायानाश्रयणे लिंगं नुड्वद्भावित्यादिनिर्देशः य
६२ त्तु वाचिहूस्वस्येत्येव सिद्धे ङितिहूस्वश्चवामीति सूत्रद्वयं लिंगं तद्धि स्नूणामित्यादौ नुडर्थं नुटि अजादित्वस्य विनाशादिति तन्न॥ वामीत्युक्ते
प्यात्त्वं सुकू विधेरिति न्यायेन औपदेशिकसन्निपातविघातसत्त्वेन चारितार्थ्याभावात् अचीत्युक्तेपि सामर्थ्येन परिभाषाया बाधाच्च
तं विहन्तीति नन्वयादेशेनैव सन्निपातनाशात् दीर्घस्य कथं तद्विघातकत्वमिति चेन्न॥ तेन पूर्वापरीभावसन्निपातविघातेपि अदन्ताङ्गे
त्ति विशेषणासन्निपातस्य सत्त्वेन दीर्घस्य तद्विघातकत्वात् सन्निपातलक्षणप्रवृत्तेः प्राक् अव्यवहितोत्तरत्वाय सन्निपातः एतदन्य-
त्तर विघातकस्यानिमित्तमित्यर्थस्य तिसृद्रत्याद्यनुरोधेनावश्यकत्वाच्च। यञादिवेति एवं च परनिमित्तकत्वेन नत्वमिति भावः। एव
मुक्ति स्वधिकांपक्षत्वेन वहिरंगत्वमिति मतसाधारण्येन तत्त्वसूचनाय नात्रेति एवं च विघातरूपविशेषणज्ञानाभावेन तत्कर्तव्यरूपविशेष-
णज्ञानाभावेन तत्कर्तृकत्वरूपविशिष्टज्ञानासंभवान्न प्रवृत्तिरिति भावः॥ अत्रासिद्धत्वं यादेशस्य हस्वान परिभाषादृष्ट्यानस्या अन्तरंगत्व
स्य दुरूपपादत्वात् परिभाषादृष्ट्या सिद्धत्वेपि यादेशदृष्ट्यासिद्धत्वेन परिभाषाप्रवृत्तेर्दुर्वारत्वाच्च षाष्ठवहिरंगपरिभाषायां बहिरंगत्वं तस्य राम:
पूर्वत्रासिद्धत्वेपि अन्तरंगत्वेन तस्याश्रयात्सिद्धत्वेन पयोडादौ वहिरंगासिद्धत्वस्यैव यं संनिपातविघातकं पश्यसि तं निमित्तं मा भूया इति ६२
तदर्थाश्रितिबोध्यम्॥ वस्तुतस्त्विति॥ अन्तरंगत्वस्य संबंधिकत्वेन तज्ज्ञानाय वहिरंगत्वज्ञानस्यावश्यकत्वेपि संनिपातलक्षणत्वग्रहस्य तद्धि

स· भ· ६२

वृत्तौ परिनिष्ठितेरूपे विशेषः तत्र जस्त्वं प्राक् प्रवर्तते न बाध्यबाधकभावः तेन रत्नमुड्भ्यां इत्यादौ न दोषः अन्यथान्तरतम्यात् चर्त्वेन षस्य षए
वस्यात् जसित्यादयः षट्वौ षट् इत्यादि निर्देशाश्चेह लिंगम्। एतेन णत्वं द्वित्वं च तुर्णाम् इत्यत्र त्यस्य ग्रंथविरोधश्चर्त्वस्य जश्त्वापवादत्वा
दित्यपास्तम्। तथाहि पूर्वत्रासिद्धम् इति द्वित्वे ऽत्यस्य वर्णद्वित्वे प्रवृत्तौ चर्त्वस्यासिद्धत्वात् गस्यैव द्वित्वे ऽत्यस्य चर्त्वे पूर्वत्र गश्रवणापत्ति
रिति हि। तत्रोक्तं तत्र च पूर्वं जश्त्वे गकयोः श्रुतिः अपवाद विषयतयान्तरभावे कुत्वनिष्पन्नकस्य द्वित्वे कद्वयश्रुतिरिति परिनिष्ठि
तेव र्गेत्तविशेषः वर्णद्वयतत्त्ववृत्तौ तु परेषामसिद्धत्वात् कुत्वे जश्त्वापवादत्वात् द्वित्वापेक्षया परत्वाच्चर्त्वे द्वित्वमिति प्रक्रिया
एवं गकारे जशि परे इति तदुत्तरग्रंथोऽपि न विरुध्यते द्वित्वे कृतेऽपि त्यर्थाभावे एकगश्रवणरूपविशेषस्य सत्त्वात् सिद्धा
न्तेतु पूर्वमेव चर्त्वमिति प्रक्रियावोध्या त्रिपाद्यां तत्र कौण्डिन्यन्यायस्तु प्रवर्तयिष्यते अहन्सूत्रे इति तत्रैव समर्थयिष्यते त्रिपाद्यां तन्न्यायप्र
वृत्तौ यत्तु भाष्यं विरुध्यते तदनित्यत्वेन समाधेयम् परं तु इदं मनोरमाकाराशयवर्णनमात्रं वस्तुतः षड्भिरिति निर्देशेनावाधकत्वज्ञापनमेव
लघु इति दिक्॥ जश्त्वापवादत्वादिति ननु प्राचीनमतेऽभेदविवक्षायामपि सत्त्वेन पदत्वाभावे चर्त्वे सार्थकमिति वाच्यमिति चेन्न यदो
तुनेति वा पदान्तस्येति पूर्वोत्तरसाहचर्येणैतत्प्रकरणस्य पदानवयवेऽप्रवृत्तेः न्यायादिति फलाभावेऽपि प्रवृत्तौ बाधकाभावादिति भावः
।पूर्वग्रंथेऽस्य फलविशेषाभावे प्रवृत्तौ न बाधकमित्येव तात्पर्यम् न तु तत्र प्रवृत्तौ बाधकमिति नीति न तद्विरोधः।मूले प्रयत्नभेदादिति ननु प्र

राम: ६२

यत्वभेदेपित्तएवस्यात् नतुसः सादृश्यस्यभेदघटितत्वेनसकारस्यसदृश तमत्वाभावात् अतएवेति आंतरतम्यपरीक्षायामभेदघटि
तस्यापिसादृश्यस्यग्रहणादेवेत्यर्थः एतेनपाक्षिकसकारनिवृत्त्यर्थंतद्विधानमित्यपास्तम् नचैवमपिवत्स्यतियत्स्यतीत्यत्रपक्षेद्वि
तीयादेशार्थंतद्विधानमितिवाच्यम् बहिरंगपरिभाषयासंनिपातपरिभाषयाचसिद्धांतेपितस्याप्रवृत्तेः यद्वासः सिअर्धतरतमआदेशइ
त्येवतकारेलब्धेतकारानुवृत्त्यादेशविधानंज्ञापकमुक्तार्थस्येत्यर्थः नतुसर्वथासूत्रंनकर्तव्यमिति अव्ययमित्यादिसमासविधाना
ज्ज्ञापकादित्यस्ययथावक्ष्यते तथाऽत्रैवेतिनचात्रकल्पनेनानुवृत्तिर्द्वितीयादेशाभावायेतिशंक्यं चर्त्वेनैवसिद्धेसूत्रस्यैववैयर्थ्यापत्तेः
तेः तदेतदभिसंधायाह॥चर्त्वेनसिद्धाविति यद्वातादेशारंभेहेतुत्रयम् सर्वथातकाराप्राप्तिःपाक्षिकसकारनिवृत्तिः द्वितीयादेशप्र
वृत्तिश्चेति तत्राद्यस्यन्याय्यत्वेनोक्तम् अतएवेति यद्वाएव कारोप्यर्थइत्याहुः॥ह्रस्वनद्यापः वहुवचनमेवेति तद्धितस्यसानुबंधक
त्वात्कास्प्रत्ययादित्तिविहितस्यापिनफलाभावात् तथाहि अदन्तेनित्यत्वादल्लोपः इगंतेपरत्वान्नित्यत्वाच्चगुणःणिजन्तेनित्य-
त्वादयादेशइति ह्रस्वांशेनफलंनद्यंतेपिपरत्वात्गुणेवर्णसंज्ञापक्षेऽप्राप्तिः तदंतसंज्ञापक्षेपिसकृद्गतन्यायाविति न्यायेनेनेतिनततः-
आवंतादाचारक्विपोऽनभिधानमेवतस्यात्र ग्रहणेपिनदोषइतिप्रक्रांतसूत्रभाष्यादिस्पष्टमुद्द्योतेइतिभावः दीर्घेष्विति दीर्घान्ते-
ष्वित्यर्थः ननुवहुश्रेयसीत्यत्रपुंस्यपिनदीत्वस्यसत्वात् खट्वायाम्अःखट्वाःइत्यादौपुंस्यप्यावंतस्यसत्वात् कथंस्त्रीत्वलाभइतिचेन्नवा-

स॰भ॰ पिव्यभिचारेणदीर्घांतत्वलाभोनस्यादित्यतआह नदीत्वाद्वयोर्ह्रस्वेपीति तदंतसंज्ञापक्षेउभयत्रापितदंतपरतावोध्या॰ नामि॰ चर्मणा
९५ मिति॰ब्राह्मणाभिस्सेतिपूर्वोक्तोदाहरणपरभाष्यरीत्येदंप्रयोजनम् अर्थवत्परिभाषयात्त द्वारणेतुनामधातोः क्विपिदेवदत्तनामित्य
त्रफलंबोध्यम् टोरतामितिनिर्देशेनप्रत्ययस्यैवग्रहणेनतदादेरेवदीर्घइतिनशंक्यंन॰आम् अनाम् इत्येवमपिनिर्देशोपपत्तेः॥ ॥ष
डित्यत्रेति नतस्यापदं ति सूचितंभाष्यस्योदासीनत्वात् मंडूकानुवृत्तेर्निष्फलत्वात्॥ ॥संख्येयविशेष्येति मुख्यविशेष्येत्यर्थः तत्वंच
स्वार्थनिष्ठविशेष्यतानिरूपकविषयतानाश्रयत्वं यस्यसंख्यावाचकत्वंसस्वपदार्थः नातः प्रियपंचानइत्यादौदोषः नन्वेवंत्रयो
दंडिनइवत्रयःपूषाणइवत्रयःपंचइवनिदंडिनःत्रिपूषाणःत्रिपंचानइत्यादावुपमि॰ तसमासेऽतिव्याप्तिःममतुषडर्थगतसंख्या
भिधायित्वाभावान्नजश्शसोर्नसेतिचेन्न परमकतरवदिष्टत्वात्॥अन्यथाकतितक्षाणइवकतितक्षाणइत्यादौनवापिस्यादुर्वारैवस्यात्
षड्भ्यइत्यस्यप्रवृत्त्याएकत्रषष्ठ्यर्थेपंचमीस्वीकारेणषड्भ्यःपरयोःषडर्थगतसंख्याभिधायिनोरित्यर्थःएवंचेत् द्वित्राःपंचशकुनय
इत्यत्रापिममनसेतिचेन्न॰ कतिपंचेवेति कतिपंचानइत्यादौतत्र् दार्ढ्यात् उभयत्रापिषट्संज्ञकःशब्दःप्रत्यासत्त्याएकएवेतिचे राम॰
देवंसत्यातत्परिहारस्यप्रयापिकर्तुंशक्यत्वात् तथाहिलोकेसंख्यावाचकत्वेनप्रसिद्धशब्दप्रकारकसंख्येयमुख्यविशेष्यकप्रती ९५
तिजनकप्रत्यासत्त्याप्रकार भूतशब्दावयवनकारान्तेतिसूत्रार्थःएवंचदशपंचेवदशपंचानइत्यादावपिनसेतिदिक्॥विहितविशे

षणमिति परमषडित्यादेरनभिधानमेवेत्निनस्वंरूपमिति सूत्रस्यभाष्यविरोधः तत्रहि षांतस्यषट्संज्ञाविधानंशब्दशास्त्रीयसंज्ञायां
शब्दस्वरूपाग्रहणज्ञापकमित्युक्तं विहितविशेषणेत्तुतदभिधानेफल भेदापत्त्यात्तदसंगतिः स्यादित्तिस्पष्टम्॥ अप्राप्तेरिति इदंचान्यरी
त्यासमत्तेतुतत्रापिपरिभाषाप्रवृत्तिः स्फुटैवेत्तिबोध्यम् नोक्तमित्तिदोषाभावात् शास्त्रेऽयमेवतुट्कर्तव्यः अन्यत्रनिटोनटोवेतिभावः॥
लिंगादित्ति॥प्रकृतसूत्रेभाष्येस्पष्टमिदम्। एतेनाचक्षापाणिचिटिलोपेसार्थक्यमित्यपास्तम् तदनभिधानात्॰ अनुवृत्तावेवेति अन्य-
त्यामुष्येत्यादावपि नस्यादित्तिभावःसर्वादीत्ति तद्गुणत्वबीजमाह अवयवेति एवंचान्यपदार्थस्यप्रायःसंयोगसमवायान्यतरसंबंधित्व
त्तत्वमित्तिभावः न्यायसिद्धत्वात्सर्वेषामित्तिनिर्देशानुधावनंनकृतंतेनैतत्साध्यं सर्वशब्दघटितत्वम् अन्यपदार्थस्योभयसाधारणत्वा
त्॥निपातनान्नेत्ति लोकेपीतिशेषः ऋष्यसंमतज्ञाप्यार्थकस्यापि अग्रेगुणइत्यादेरनादरात् तत्संमतिमाह प्रयोजनेत्ति एकदेश्युक्ति
रित्ति यस्तुविहितविशेषणाश्रयणसामर्थ्यात्सर्वनामपदेयोगरूढ्यंगीकारेणसर्वार्थवाचकसर्वनामसंज्ञकसर्वादेर्विहितस्यडेः स्मै
इत्यत्तिसर्वादौनदोषइत्तितस्यापिसिद्धांत्युक्तित्वं समर्थयांचक्रेसएवंवक्तव्यः मासपूर्वायेत्यादिव्यावृत्त्यासार्थकस्यतस्यकासाम
र्थ्यमित्तिमहासंज्ञयैवतत्सिद्धौविहितपदाध्याहारोविफलइत्यरुच्येवाग्निमभाष्यस्यत्तथापिव्याख्येयत्वात् मूलतोधिकंकिंपराक्रा
न्तंत्वयेत्तिच॥संख्याकारकाभ्यांपूर्णेत्ति संख्याकारकाभ्यांपूर्णोयोर्थःतस्येत्यर्थः।गमकत्वात्समासः।अन्वयेनेति।अयंसुवंतान्तदुत्य

स·भ· नौहेतुः इदं चाकच् विधौ विभाषा सुपइत्यतः सुपइत्यस्य संबंधेपि वाक्यभेदेन युष्मद्     तद्प्रकृतिकसुबंतस्य टेः प्रागकच् विधायकमि
९५ त्याशयेन· यदित्वकच् सूत्रीयशेखरोक्तरीत्या वाक्यद्वयेपि संबंधः सुबंतावयवसर्वनाम्नः टेः प्रागकजिति वाक्यार्थः तदास्य ष्टेवसुबंतात्तदु
त्पत्तिः अत्र त्यं तत्वमुभयशब्दे स्फुटीभविष्यति सुबंतादिति। ल्यपूलोपे पंचमी। सुबंतं संपाद्येत्यर्थः उत्पत्तेरित्यस्याग्रे कर्तव्यत्वादितिशे
षः। यथाश्रुतं तु न युक्तम्। उक्तभाष्यात्। सुब्तुत्पत्त्यनंतरं तदुत्पत्तिलाभेपि देशविशेषस्यालाभात्। घकालेत्यादिना तल्लाभेपि अकचि कृते
तद्बाधात्।। एवमग्रेपि।। सर्वनामप्रकृतिकसुबंतादिति व्याख्येयमिति न तदसंगतिरपि। प्रागकजित्यस्याग्रेकर्तव्य इतिशेषः।। इत्यर्थोत्तदं
तेति· नन्वेवमपि सर्वक इत्यादौ सर्वार्थकुत्साद्युबोधयिषायां किमादेरकच् दुर्वारो ऽ तन्निवारणार्थं सर्वनाम्नः टेः प्रागकच् प्रकृत्यर्थकु
त्सायामिति प्रत्यासत्तिरावश्यिकेति तथैव तत्तदं तत्संज्ञाभावेन तदसिध्युपपत्तावयंप्रयासो विफल इति चेन्न· भवतु शब्दात् सुप्युत्पत्त्य
नंतरं त्यं तत्स्वार्थिके कनि भवदर्थकुत्सा विवक्षायामकचेत्यस्य फलस्य वक्तुं शक्यत्वेन सुवचत्वात्।। असिद्धिरिति· समासार्थकुत्साविव
वक्षायामसिद्धिरिति भावः नन्वेवं भवकतुशब्दे न समासे समुदायकुत्सा बोधको ऽ परो ऽ कच् स्यादिष्टापत्तेः एतेनान्तरवर्तिसुपासुबंतत्व- राम:
मादाय तत्सिद्धिरित्यपास्तम्· एवमेवेति· सर्वनामप्रकृतिकसप्तमीपंचम्यंतात् त्रत्तसिलाविति तदसिद्धिरिति भावः।। एवमभवकद्भ्यामि- ९५
त्यादौ नञ्समासे पूर्वपदप्रकृतिस्वरे ऽ कचि अंतोदात्तत्वं सिध्यति अन्यथावयवादुत्पत्त्यास्वरद्वयं स्यादेतेति बोध्यम्।। ।।चरितार्थमिति·

॥ह्रूंह्रे चेति निषेधस्तु विशिष्टस्य स्वांगशिटामिति प्रकृतिस्वरो कजु निषेधकत्वेन कृतार्थः स्यादिति भावः। इदमुपलक्षणं परमसर्वे इति तदंतसंज्ञोदाहरणपरं भाष्यस्य। वस्तुतस्त्वंगसंज्ञकाददंतसर्वनाम्नः परस्येति सर्वत्रार्थ इति न कापि विहितविशेषणम्। अत एव सर्वनाम्नः परस्यामइति तस्मिन्निति सूत्रे भाष्य उक्तमित्याहुः परे त्विति। अत एव काणेति॥ यद्यपि नानुबंधकृतमनेकाल्त्वमित्यत्रानुबंधत्वयोग्यत्वानिवेशफलं न॥ तथापि वक्ष्यमाणभाष्ये योत्संज्ञायोग्यत्वमेवानुबंधत्वमिह शास्त्रे इति बोध्यं तेन तु लक्षणात्तत्फलमुक्तमिति न दोषः। अनुबंधेति। तत्त्वज्ञानेत्यर्थः। एवमग्रेपि बोध्यम्॥ विकल्प इति॥ ननु दधातीत्यत्रान्तादेश इवात्रापि प्राक् विकल्पो न स्यादिति चेन्न। अजणादिविषये स्त्रीयासारूप्यमादाय प्राप्तविकल्पनिवृत्त्या सार्थक्येनापवादोपीति नायविषयतया दधातीत्यत्रोत्रं वैषम्यात् अत्रत्यं तत्त्वं परिभाषेंदुशेखरविवृतिसंग्रहे स्पष्टम्। ध्वनितमिति। तत्र हि डाकारस्य शित्त्वं कार्यमित्याशंक्य नित्यत्वात्प्रश्लिष्टत्वाद्दाद्वित्युक्तम्॥ अंत्ये शितउदाहरणे शिरस्याविदित्युक्त्वा आनुपूर्व्या अनेकाल्त्वात्सिद्धमित्याशंक्य नानुबंधेति ज्ञापनेन सार्थक्यमुक्तम्। वस्तुतस्तु न्यायसिद्धत्वेनानित्यत्वादित्येव सिद्धांतयुक्तिः। न्यायसिद्धे तद्भाष्यविरोधेन प्रश्लेषप्रयुक्तगौरवेण च न तत्तादृशतद्ग्रहणेफलाभावाच्च तद्भाष्यद्वयमेकदेश्युक्तिः। अत एव परस्मैपदानामिति सूत्रे भाष्येऽनित्यत्वादेव णलः सर्वादेशत्वं साधितं न तु प्रश्लेषादपि परिभाषाज्ञापनं तु युष्म इति निर्देशेनापि सिद्धं शित्ग्रहणं च न कार्यमिति तदाशयमाहुः। विभक्तित्वयोग्य इति। यद्यपि

स·भ· ९६ दधतीत्यादिवदिदमपिलक्षणांविनैवसिध्यतितथापिस्थानेंतरतमइतिसूत्रोक्तभुक्तवंतमितिन्यायविरोधात् अनर्थकत्वमुक्तम्
तद्वीत्येदमितिनोक्तदोषः॥नित्यशब्दोऽवधारणार्थइत्याह एवेति अनेनसजातीयवचनस्यव्यवच्छेदाद्याचारिकंभवत्येव· अर्थेप
रत्वेएवायंनियमइति· शब्दपरत्वेउभाहित्यादिभवत्येव· नचसुवंतेति। अयंभावः त्वयकामयकेत्यादिसिद्धयेविभाषासुपइतिसूत्रा
दकच्विधौसुपइतिसंबध्यते· तथाचायमर्थः युष्मदस्मद्प्रकृतिकौकारसकारभकारादिसुवंतस्यटेः प्रागकजिति एकः सुवंतावय
वसर्वनाम्नःष्टेः प्रागकजित्यपरः एवंचसुवंतस्यप्रत्ययविधानुद्देश्यतावच्छेदकाक्रान्तत्वात् प्रकृतित्वंस्पष्टमेवेति। एतेनसुवं
तादकच्चिउभाभ्यकामितिरूपेणविशेषस्यसत्त्वेनत्वरपर्यन्तानुधावनं प्रथमौकारसकारभकारेत्यादितुयुष्मदस्मद्विषयिकमित्यपा
स्तम्। किंतुप्रकृतेरिति· भ्यामादिप्रकृतेरित्यर्थः॥सुवंतात्परइत्यस्यसुवंतंसंपाद्ययतः कुतश्चित्परइत्यर्थः। यथाश्रुतंतु नस्युक्तं न्यायास
ध्यत्वात्· अकच्विधासंभवात्॥प्रातिपदिकस्यैवेति। अकच्सूत्रीयशेखरस्तुस्वरूपकथनपरः नतुद्वितीयवाक्येतद्संबंधपरइति
नतद्विरोधः॥अतएवकाकचोः कोविशेषइतिभाष्यंसंगच्छते॥यत्तु अकच्विधौउद्द्योतेउक्तम्। उभयंप्रकृतमितिप्रतीकमुपा रा·भ·
दायप्रातिपदिकाधिकारात्सुवंतसामर्थ्याद्विततश्चिंत्यम्॥इति विशेषइति। यत्तुप्रकृतसूत्रेउद्द्योतेएवमज्ञातोभयोर्घटइत्यर्थेऽक ९६
च्ययचिउभकयइतिरूपंकेऽप्ययचिउभयकइति· कस्यद्विवचनेउभकइतिवास्यादितिरूपेविशेषइत्युक्तंतत्तुवृत्तौकृतायामयजि-

ति· प्राचीनवासनयावृत्तिविषयेपूर्वमेवसद्वृत्तिसिद्धांतेतुसर्वथोभयकघटाद्युत्येकमेवंभवितव्यमितिविशेषाभावः स्पष्टएव अत्तएवतद्विशेषानु
क्तिरत्रग्रंथे आदेशपक्षेतयपूस्थानिकत्वेनायचः तद्विकल्पेनैववाक्यसिद्धौफलाभावेनमहाविभाषायाअसंबंधः सिध्यति· प्रत्ययान्तरत्वप-
क्षेतदसंबंधार्थंतत्स्यादत्तआह· भाष्यकृतेति· व्याख्यानंसंबंधावश्यकत्वेहेतुः। अन्यथाफलभेदेपक्षभेदासंगतिः स्यादितिभावः अयोग्यंस
दिति। द्वितीयसूत्रस्थवेत्यस्यास्वरितत्वादसंबंधमभिप्रेति। ननुकारकमनोरमायांवस्तुतस्त्वित्यादिनावृत्तौकृतायामयजित्यर्थलाभेनोभ
यतः। उभयत्रेत्यादाविवेतिदृष्टांतासंगतिः अन्योन्याश्रयापत्त्यात्रलादेरेवानुत्पादप्रसंगात्· सत्यप्यथचित्रलादिव्यावृत्तिः संत्यांचत्रला
दिव्यावृत्तावयजितीत्यत्तआह· अयंचेति· कारकमनोरमाग्रंथस्तुप्राचामनुसारीति। नतद्विरोधइतिभावः। ननुउभशब्दस्यायचिकृते
सर्वत्रैवतद्विषयत्वाभावसंभावनायद्ययचंविनासंभावनेत्युच्यतेतदोभयतउभयत्रेत्यादावपिसनस्यादतआह।। उभयशब्दस्येति। द्विव
चनेति।। तच्चोभशब्दप्रकृतिकमेवेतिनाग्रहः।। तेनपरमौभौउभोभौइत्यादौसमासप्रकृतिकेपितत्रनायच् प्रत्याख्यानेद्विवचनशब्द-
ग्रहणेनतदर्थस्यसंभवेनारंभेपितथैवोचितत्वात्उभयशब्दादुत्पन्नंद्विवचनमिति· मनोरमाग्रंथस्यतुतदंतादित्यर्थइतिबोध्यम्· वि-
षयत्वंचपरत्वं· नन्वेवमुभावित्यत्रप्रक्रियायामेकादेशतः प्राक्तस्यतत्परत्वसंभावनायामपिपरिनिष्ठितेतदभावस्यापिसंभावन
याऽतिव्याप्तिर्दुर्वारेतिचेन्न। तद्विषयत्वसंभावनाभावस्यविवक्षितत्वात्· विषयत्वविषयिणीअभावप्रतियोगिभूतासंभावनेत्यर्थात्।

स·भ· लुकोचानुत्पत्तिरेवेतिनतत्रापिसंभावनेति· वोध्यम्।यद्वोभौसाभ्यासस्येतिनिर्देशेनस्वोत्तरत्वस्यावयववत्वान्यतरसंबंधेनतद्विशिष्ट-
९७ त्वमेवतद्विषयत्वंपरिनिष्ठितेविवक्षितमितियथाश्रुतमपिसाधुः।अलुकीति।यद्यपिद्विवचनवहुवचनयोरलुकूनेति।अलुगुत्त
रपदइतिसूत्रभाष्याल्लभ्यते·तथापिसंभवाभिप्रायेणेदमुक्तमितिवोध्यम्।निर्देशेनेति।उभयशब्दप्रकृतिकसुवंताभावेनस्वार्थि
कायज्जुत्तरंचारित्तार्थ्याभावेनतत्रकौंडिन्यन्यायाप्रवृत्त्यासर्वथानिरवकाशत्वेनैवावयवार्थकोऽयचूतद्वाधकःस्यादितितत्रकृते
क्रोष्ट्रीत्यत्रङीपूवत्स्वार्थिकोऽयच्दुर्वारइतिनिर्देशेनैववारितइतिवोध्यम्॥ ॥अनभिधानमेवेति।तत्प्रत्याख्यानेनफलैक्यायेद
मावश्यकमितिभावः वस्तुतइदंप्रत्याख्यानमिष्टापत्तिंकृत्वैवअतएवोभौभाविनिवक्ष्यमाणग्रंथसंगतिरितिवोध्यम्· अयच्यकचू·
तुनेति· अयंभावःसुवुत्पत्तेःपूर्वमयजंगीकारेतत्रकृतेऽयजंतस्यगणेनपाठेनसर्वनामत्वादकचितद्विषयत्वमेवस्यादितितदभाव
संभावनाभावेनपूर्वमप्रवृत्तोकप्रत्ययेपीष्टसिध्योभशब्दपाठोव्यर्थःसुत्त्यनंतरमयजंगीकारेतुनायंदोषइति·उपजीव्यत्वेनेति· अयंभा
वःउत्तरीत्योभयशब्दस्यतद्विषयत्वाभावसम्भावनाभावेपिउभशब्दस्यकप्रत्ययविवक्षायांतदभावसम्भावनासत्वेन।अयच्युपजीव्य रामः
कापवादाकचोऽप्रवृत्तिरिति।नचैवमुभयशब्दस्यैवतदभावसंभावनायचूप्रयोजिकास्तुउभयशब्दस्यतुसामास्तुफलाभावात्· एवं ९७
चपाठेनकार्यइतिलाघवंनह्यत्रापिकप्रत्ययस्योपजीव्यत्वमितिवाच्यम्·एवमपिपूर्वमयचूमाप्रवर्ततांकप्रत्ययोत्तरंतुसप्रवर्ततेनतदा

तदभावसंभावनासत्वादित्याहुः किमर्थमिति॰ एवंसतिप्रत्ययविधौ तदंतविधिनिषेधेनपरमोभकावित्याद्यसिद्धिस्तु न तन्निषेधेपिअ
व्ययोभ सर्वनाम्नांटेः प्रागकच् तदर्थगत कुत्सादावित्यर्थेन समुदायार्थेतद्विवक्षायामवयवार्थेनदविवक्षायावक्तुमशक्यत्वेनपरमगार्ग्यो
यणादूत्यत्रोक्तरीत्येष्टसिद्धेरित्याशयात् परमभवकानित्यत्रोक्तंतुमतान्तरमितिक्षोदिष्यते· विशिष्टस्यप्रकृतित्वाभावेऽतुभकावित्या
दौस्वरेतुनदोषः सन्निश्लिष्टत्वेन स्वघटितपदघटितत्वेनचनिघातप्रवृत्तेर्निष्प्रत्यूहत्वात्· एवंहिगणेऽन्तोदात्तनिपातनंनकार्यमितिला-
घवमितिभावः प्रत्याख्यानेनगणेऽन्तोदात्तनिपातनानुमानम् अन्यथास्वार्थेपाठस्यावश्यकत्वात्तदसंगतिः स्यात् २२ अत एवोपसर्ज
नेति। इदंचतच्छब्दस्यान्तत्वेइति पक्षेफलंसुवचमितिवादिनांमतेन स्वमतेउपसर्जनेकुत्सादिविवक्षायाः कर्त्तुमशक्यत्वंस्पष्टमन्यत्रेतिबो
ध्यम्। अनुवादकत्वमिति· बोधकत्वमित्यर्थः। अत एवोभाविन्यस्यसिद्धिः अत एवोद्वयोर्नेवोधकपदोपादानमेव॥ अभाववोधकेति·नवे
तिविभाषेत्युक्तेरितिभावः एवंचापवादविषये अंतरंगोद्भावनम्· असंगतमितिभावः इदंचप्राप्तिमभ्युपेत्यवस्तुतस्तत्प्राप्तिरेवनेत्याह· किं
चेति· युगपत् प्राप्त्यभावादिति उभयविषयकवाक्येजसिपरतः सर्वनामतावानभवतिजसः कार्यंप्रतीतिसूत्रार्थः अत्रपक्षेजसः कार्यमितिवा-
चनिकंयद्वाजसः स्थानेआदेशकर्तव्येजसद्कारेकर्तव्येइत्यर्थोवाजसुत्तरमेवतस्यकर्तव्यतेतिना युगपत्प्राप्तिः प्रकल्प्यचेतिन्यायेन
प्रवृत्तिपक्षेनित्यसंज्ञायाः पूर्वम्प्रवृत्तिः अप्रवृत्तिपक्षेजसः पूर्वमेवनित्यसंज्ञाप्रवृत्तिरित्युभयेद्वत्यस्यसिद्धिरितिभावः॥ ननुप्रथमेद्वत्या

स॰भ॰ दिसिद्ध अनुरोधात् वाक्यांतरे जस्विषये पूर्वमेव सर्वनामत्वाभावनिशीभावे कर्तव्ये इत्यर्थे आवश्यकः जसश्यादेशस्य विषये इत्यर्थो
९८ वाउभयथापि शीभावविषयता जसः॥ प्राक्कालीनैव सामर्थ्यानुगृह्यते इति युगपत्प्राप्तिर्नित्यविकल्पविध्योः संभवतीति चेत्तत्राप्यसं
भव एवेत्याह॰ जसीति विषयसप्तमीति॰ ननु मनुष्ठीयं प्रात्तरुत्थायेति दृष्टांतेन पूर्वं यस्य निमित्तसंपत्तिः तस्य पूर्वं प्रवृत्तिरित्यर्थः सिध्य
तितस्यापि परिभाषया क्रोडीकारेन बाधकं तत्रासिद्धत्वं च निमित्ताभावादप्राप्तिरूपमिति युगपत्प्राप्त्यभावेपि परिभाषा संचरत्येवेति चेत्त-
त्राह॰ स्थानिवदिति॰ निरवकाशेति॰ अयं भावः प्रकृतिभेदात्प्रत्ययो भिद्यते स्थानिभेदादादेशो भिद्यते आदेशभेदात्स्थानिवद्भाववाक्यं भि
द्यते न तु विधिभेदाच्च॰ एवं चोभयशब्दावयवोऽयच् आदेशः सर्वनामत्वे न तु विधौ कर्तव्ये तयरूपस्थानिवदिति वाक्यं निरवकाशमि
ति॰ एतेनोभयीत्यत्र ङीप् संपादनेन द्वयेत्यादिसाधनेन चातिदेशप्राप्तितापि सावकाशेति परास्तम्॥ अंत्यस्यानभिधानाच्चचेन निषेधा
नां बलीयस्त्वस्य संग्रहः॥ ननु परिभाषाविरोधादतिदेशवाक्योप प्लव एवेति चेत्तत्राह॰ प्रत्यक्षेति॰ निरवकाशत्वं च द्विवःकर्म चेति सू
त्रस्थ मनोरमानुरोधेन तद्रीत्यापि॰ ननु कार्यकालपक्षे जसुत्तरमेव नित्यसंज्ञायाः अपि प्राप्तिरिति युगपत्प्राप्तिरस्त्येवेति चेत्तत्राह सर्वना राम॰
मेति अत एव तयादेश इति तयवन्तत्वप्रयुक्ते आदेशे कर्तव्ये उभयशब्दावयवादेशस्य स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः अत एव ९८
वार्तिकमते उभयीति ङीपि कर्तव्ये तत्प्रतिषेधो न शीभावे एव तद्विधानात् अत एव भाष्ये यदि प्रत्ययांतरम् उभयीत्यत्रैकारेण प्रा

न्नोतीति शंकितम्· ननु यदिस्थानिवत्त्वप्रतिषेध इत्यादि॥ अनभिधानमेवेति· इदं हि त्रिभ्यां तयस्यायच् वेति· तयप्रहणास्याकरण
प्रौढ्या वस्तुतस्तु उभशब्दप्रकृतिक एवायच् प्रत्ययान्तरं तत्र तयस्येत्यननुवृत्तेः द्वित्रिप्रकृतिकस्तु तयस्थानिक एव न तु प्रत्ययान्तरमिति पा
ठकाः एतन्मतनञ्झालवोऽन्येत्यत्र ह्ययच् प्रत्ययान्तरमिति भाष्यं यथाश्रुतं युज्यते· असत्तिबाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्व
यस्य व्युत्पत्तिसिद्धत्वात्० त्वया तू भशब्दप्रकृतिकोऽयच् इति व्याख्येयमिति तद्भंगः स्यात् भाष्ये तत्र च द्वितये इत्येव पाठ इति· वदन्ति· इ
दं च नवेति विभाषेत्यारंभे प्रत्ययान्तरत्वेन समाधानमावश्यकमिति स्पष्टमेव तत्रत्यव्याख्याने त्वंतरंग प्रथमादिसाहचर्याद्धि विधिमुखेनैव प्रवृत्ति
र्भविष्यतीति नित्यसंज्ञाप्रवृत्तिर्मूलोक्तरीत्या न्याय्येवेति बोध्यम्॥ तदंतविधिद्वयेनेति· यद्यप्येकेनापि तदंतविधिना प्रयोजनलाभात्पाठः
सार्थकस्तथापि सत्येकस्मिंस्तदन्तविधौ प्रत्ययग्रहणाभावेन संज्ञाविधाविति निषेधाप्राप्त्या प्रयोजनं सर्वनामेति बोधितं तत्तदन्तविधिस्वीकारे बाध
काभाव इति भावः॥ सन्निहितत्वादिति॥ दिग्देशवृत्तीनां प्रवृत्तिनिमित्तभेदादेव भाषितपुंस्कत्वाभावो भाष्योक्तः संगच्छते। येन सदृशः स्यान्नेनरत्न
म इति यथा॥ प्रथमार्थ एवेति· प्रथमानिर्दिष्टसाध्यप्रयोजनसाधनतात्पर्यक एवेत्यर्थः ननु चिकीर्षित इत्यध्याहारतात्पर्यकः लघुनि प्रथमा
निर्देशे कर्तव्ये गुरुस्सप्तमीनिर्देशस्त्वदृष्टार्थ एवेति भावः। सौत्रत्वात्प्रथमार्थे सप्तमीत्येवं तु न व्याख्येयम्· गौरवात्· मनोरमोक्तरीत्यासिद्धेः फला
भावाच्च अन्यथेति चिकीर्षित इत्यध्याहारतात्पर्यकत्व इत्यर्थः व्यर्थः स्यादिति· इदं तु चिंत्यम्। पाणिनिनापि किमर्थं प्रथमार्थे सप्तमी स्वीकृते-

॥पदवंतीति॥३

स·भ· ति प्रश्नेतत्वाप्युत्तरस्यदुर्लभत्वात्· अपरशब्दस्तुरूढः परापरयो स्तुल्यार्थत्वात्· नामपदस्वारस्येनेति·नम्यमानार्थकंनामेतिव्युत्पत्तेरिति
९९ भावः॥विशेष्यभूतार्थकमितियावत्॥अभिव्यक्तेति· इदंचान्येषांमतेन।कचित्वेतदपपाठःस्वमतेतुप्रसिद्धार्थकाव्ययभूतनामपदस्वार
स्येननामपदोपादानादेवोभयलाभः।यद्वासर्वेषामितिवहुवचनेनप्राधान्यलाभः अव्ययनामपदेनप्रसिद्धलाभइतिबोध्यम्॥४॥इदं
चान्यरीत्यास्वीयमतेतुवृद्धिसूत्रोक्तरीत्यापदाभिन्नानीत्यर्थोबोध्यः।लोकतःसिद्धेरिति·यत्रसंज्ञोपसर्जनीभूतेउभयमपिलोकतःप्रसिद्धं
तत्रासंभवान्नोभयविधिरितिबोध्यम्·नचासंभवेपितत्सादृश्यविधिरन्यत्रेवास्तुअन्यतरविधानेपिसार्थक्ये नान्यत्रेवात्रसामर्थ्याभावा
दितिभावः·एतेनेति·उक्तरीत्यासर्वार्थवाचकस्य पदार्थैकदेशत्वेनेत्यर्थः॥दोषांतरमप्याह एकपदेपेति अव्युत्पन्नत्वादिति·इदंचस
मासेउद्देश्यविधेयभावेनान्वयोनेतिवादिनांमतेस्पष्टमेव॥तन्मतेतेनरूपेणान्वयेपृथगुपस्थितेस्तंत्रत्वात्·स्वमतेतुसमासेपितथा
न्वयोःभवत्येवेतिकारकेवक्ष्यतेमंजूषायांचवक्ष्यते·तदाऽव्युत्पन्नत्वादित्यस्यौत्सर्गिकत्वादित्यर्थोनिपुणतरैर्मत्सजातीयैरपर
पिवेदित·यः॥पदन्नोमा·स्वानुरूपादिति·वर्णोतोऽर्थत श्चेतिबोध्यम्·नन्वस्यवैकल्पिकत्वात् चरणादेरादेशत्वेपिनदोषइतिचेन्न·प राम:
दादित्यस्माच्चरणत्वप्रकारकबोधोमाभूदिति·चरणोऽस्त्रियामित्युक्तेस्तस्यनपुंसकत्वेनतस्यादेशेशसिपदिपस्येतिमाभूदितिसुन्दरा ९९
श्चादित्यत्रमुखस्वांगमितिस्वरोमाभूदितिच·अंतरतमइतिसप्तम्यंतपाठस्यदूषितत्वेनैतल्लाभःकथमितिपरंचिंत्यम्॥भाष्यइति·ज

तावेकवचनंचेति· तदर्थकान्यतरस्याग्रहणमित्यर्थः निशनिशयोरिति· शब्दपरत्वेनभिन्नार्थत्वान्नैकशेषः सुटीतिद्वंद्वंचसुप्त्वेनसाह
श्यमितिमते· हलंतेति॥ विपरीतंतुन· आस्यंचप्रयं तस्येतिभाष्यप्रयोगात्॥ नन्वच्छंदसिसर्वविधीनांवैकल्पिकत्वेनादेशत्वेपिदोषाभावा
द्भाष्यमेकदेश्युक्तिरेवात आह· येचतद्धितेइति· इत्युक्तमिति· तस्यस्वरितत्वेतुशिरस्यपि अस्यदुर्वारत्वेनतन्निवृत्तयेक्रियमाणः स्था
निनिर्देशोविफलःस्यादितिभावः॥ ननुवाकेशेषितिज्ञापकात् नात्रसंबंधइत्युक्तमेवेतिचेन्न· तज्ज्ञापकानुसंधानेहिप्रकृत्यंतरत्वेपि
दोषाभावेनतदसंगतेस्तदवस्थत्वात्॥ प्रकृत्यंतरेति॥ तेचशसादौसाधवइत्यर्थः अतोनपूर्वोक्तभाष्यादिप्रयोगविरोधः अतएवेति·
नतुआआविति प्रश्लेषादितिभावः। यत्तुवृत्तिकारमतेशिरसइतिस्थानिनिर्देशोनकर्तव्यः भाष्यानुसारिमतेतुकर्तव्यइतिपाठकल्पि
तंलाघवोपवर्णनंतन्नशीर्षण्यइतिवत्शिरस्यइत्यस्याप्याप्तेः अन्येतुपदादीनामादेशत्वमेवतस्यन्यायप्राप्तत्वात्· अतएव
शीर्षंश्छंदसीतिसूत्रेभाष्येप्रकृत्यंतरंद्रष्टव्यम्· आदेशोमाविज्ञायीत्युक्तम्शिरसोग्रहणम् कर्तव्यंप्रकृत्यंतरंमाविज्ञायीति·
येचतद्धितेइतिसूत्रस्थंभाष्यंत्वर्थाधिकारप्राप्तातिप्रसंगभंगायेतिनास्माकंप्रतिकूलंवाकेशेषित्यत्तोवेतिसंबध्यतेतेनहृदय-
स्येत्यादेर्नासंगतिः। वार्तिकस्थपदस्याप्यनुवृत्तिःसूत्रैकदृष्टेतिचेत्· वैयाकरणाख्यायांचतुर्थ्याइणःषइत्यनयोःपश्यअ
तएवशीर्षन्छंदसीतिसूत्रेइवपद्दन्नितिसूत्रेप्रकृत्यन्तरंद्रष्टव्यमितिनोक्तम्· तेनह्यत्रसूत्रेआदेशत्वप्रकृत्यंतरत्वयोः

स॰भ॰ फलाविशेषो ध्वनितः विकल्पासंबंधे तु विशेषस्यस्पष्टतयानुक्तदसंगतिः स्पष्टैवेत्याहुः आहुरितिस्थानेन्तरत्तमेद्वृतिपाठदूषणा
१०० वसरेएतत्फलान्यथासिद्धं करणात् प्रकृत्यंतरत्वमेषां ध्वनितंभाष्येइत्यपि बोध्यम् सुड नपुंसकस्य। व्याख्यानादीटइति आ
गमस्तुना सर्वनामस्थाने चासंबुद्धाविति पर्युदासात् फलाभावाच्च टाट कारेणप्रत्याहारे शसोप्यनलभीवात्॥ शिसर्वनामस्थानेइति
नियमाश्रयेणेतरेषां लावेसंज्ञाविरहेसिद्धे अनपुंसकस्येति व्यर्थमेवस्यात् अनुबंधवत्त्वेत् शेरेवेति नियमस्तु न राजासेमनु-
ष्ययुवानइति निर्देशात् अनुबंधवत्वोऽजरूपस्यचेत् शेरेवेतित्तेन राजानौ पश्येति ओटिनस्यादितिचेत् ओटिटकारोच्चारणसा
मर्थ्यात्तेन प्रत्याहारइत्यवेहि। सुट्सर्वनामस्थानमशीरिति तु न सूत्रितं ज्ञानमित्यादौ सन्निपातपरिभाषयानुमूवारणसंभवेपि
अजरसंपश्येत्यादौ दीक्षितमत्तेन ग्लंत्तलक्षणतुमापत्तेः सर्वेइत्यादौ यस्येतिलो। स्तु न ओडःश्यामित्यत्र ओडित्यस्याकरणात् न
त्रन्याख्यानेनतद्लाभाच्च स्वादिषु प्रथमैकेति अत एवासर्वनामस्थानेति चरितार्थम् व्याख्यानादिति सुपांग्रहे इष्टे सुप्सुड्इत्येववदे
त् अधिकग्रहे विनिगमनाविरहात् कवंतानामितिभावः॥ कपः संग्रहाय हतरन्तेघिति यचिभंसोत्रत्वान्नटजिति। समासांतानित्यता राम॰
याः स्कपत्वात् इतरेतरयोगद्वंद्वे एकवचनमिति नो क्रमः। तेनेति पूर्वसूत्रे राजानावित्यत्र नलोपस्तु नापादितः॥ भसंज्ञयाबाधात् भव १००
तीति तेन दत्तः दत्तेत्यादौ जश्त्वं नेति भावः आकडारादेकासंज्ञा संज्ञाग्रहणंस्पष्टार्थं प्रकरणादेव तल्लाभादिति स्पष्टमत्रैव भाष्ये

व्याख्यर्थकेति· तेन चार्थे द्वंद्व इत्यस्य संग्रहः· तेन कर्मधारयसंज्ञाविषयेन द्वंद्वसंज्ञा युक्तमिति· तदुत्तरमस्यानुपयोगादिति भावः। पदगौ
रवेपि मात्रालाघवं प्रतिपत्तिलाघवं चात्र पक्षे इत्याशयः। इदमुपलक्षणम्· आद्वंद्वादित्यस्य तेनाभिव्यःत्यर्थकत्वं संभाव्येत· सिद्धां
तेतु तथात्वेपि न क्षतिरित्यपास्तम्। वस्तुतोऽवधिनिर्देशोऽफलः उपसर्जनं पूर्वमिति प्रकरणे विच्छेदेनाग्रे असंबंधसंभवात्· निरवका
शत्वेति· एकस्यादिति भावः· ननु एकेत्युक्तेः परैव कुतोऽत आह· विरोधाभावेनेति· पर्यायापत्तिरिति· पर्यायो हि क्रमप्राप्तस्यानतिक्रमः तत्कार्ययो
र्मध्ये यत् क्रमात् प्राप्तं परं तदनतिक्रमस्यापत्तिरित्यर्थः सिद्धांते तु संज्ञयोर्या परा तत् प्रयुक्तं कार्यं पूर्वमपि प्रवर्तते इदानीं तु कार्यगतप
रत्वं नियामकं स्यादिति भावः। एतेन एकमेव कार्यं स्यादिति चिंत्यमेतदित्यपास्तम्· नलोपस्यापत्तिरिति। सर्वथा निरवकाशत्वाद्दन्लोपे जाते
इति भावः। नदीघिसंज्ञे इति भाष्यप्रयोगात्पूर्वनिपातो नद्याः अनुपपादनादिति· लघुनोपायेनेति शेषः। दीर्घाच्छसित्येवेति· तस्माच्छ
स इत्यतः प्रागिति शेषः। एवं च तस्माच्छस इत्यत्र शसग्रहणं न कर्तव्यं भवति· तस्मादिति पंचम्याशसीति सप्तम्यंतस्य षष्ठ्यंतत्वकल्पन
संभवात्· चो न कर्तव्य इति लाघवमिति भावः। नन्वेवं तच्छब्दोऽनंतरपरामर्शार्थ इति सिद्धांतात् नियमशास्त्राणां विधिमुखेन प्रवृत्तिरि-
ति पक्षे बहुश्रेयसीनित्यत्रैव नत्वं स्यात् ननु हरीनित्यादौ तदुत्तरं पाठे तु शसः परं कर्तव्यं हरीनित्यत्रैव स्यान्न तु बहुश्रेयसीनित्यादाविति दो
षश्चेति चेन्न· प्रकृते निषेधमुखेनैव प्रवृत्तिरित्याशयात्· तस्मादित्यनेनाकोदीर्घः परामृश्यते प्रथमयोर्वा दीर्घः परामृश्यत इत्याशयाद्वा

मृगानूहंतीतिनिर्देशश्चात्रलिंगंस्पष्टंचेदंसर्वंप्रथमयोरित्यत्रभाष्येविपरीतनियमापत्तेरिति॰मृगानूहंतीतिन्हृनूपेकानाम्रेडितेइतिनि
र्देशाश्रयणेतुप्रतिपत्तिगौरवमितिभावः॰नन्वेवंप्रथमयोःपूर्वेत्यत्रभाष्योद्द्योतविरोधःततोहिमंथादस्यन्यासस्यनिर्दुष्टत्वंलभ्यतेइति
चेन्न॰इचूग्रहणंनकर्तव्यमितिप्रसंगसत्वेनतस्यलाघवपक्षपातित्वादितिवदंति॰अत्रदीर्घात्‌सुटीतिसूत्रयितुमुचितम्॰आतोधातोः
सानितीति अकारेणसहितानित्यर्थः॰एतेनपंचमीसमासेनस्वमतेस्थानिवत्वेनान्यथासिद्धिःप्रयुक्ता यद्यभिधानमिति॰यदीत्यनेनेदंसूचि
तंवस्तुतःफलभेदायतेषामनभिधानमेवेति॰नन्वनापइत्यस्यप्रत्याख्यानंत्क्वः॰श्वइतिनिपातनेनापिभाष्येकृतंतेनस्यत्रलोपोनेष्टइति
प्रतीयतेयोगविभागेनप्रत्याख्यानंतुनास्माकंप्रतिकूलंविरोधअतोभाष्यान्तरविरोधमाह अतएवमेति एतदेकवाक्यतयैवनिपात
नेनधातुपदस्याप्‌भिन्नपरत्वबोधनद्वारालोपइत्यर्थः॰कार्यः॰तदयेकथंश्वइतिप्रश्नस्तुउक्तमाशयमजानतएकदेशिनः॰अतएवभूवा
दिसूत्रेभाष्येयाःपश्यसीत्यस्यान्यथासिद्धिः॰अनापइत्युक्त्वोक्ता॥धातुपदस्ययथाश्रुतार्थकत्वेतदसंगतिः॰स्पष्टेव॰नन्वेवंनमुनइति
सूत्रप्रयोगस्यनेयत्कार्यमितिततसूत्रीयभाष्यप्रयोगस्यचविरोधइतिचेन्न॰वंधुनीतिवत्‌॰नपुंसकनिर्देशांगीकारेणोभयोपपत्तेरि- 
तिवदंतिः॰दीर्घंविधायेति पररूपवाधकेदीर्घेकृतेपूर्वसवर्णादीर्घेसिद्धांतइवनत्वस्यसत्वात्तदर्थकेषांचितूतस्मादित्यत्रतच्छब्देना 
कृस्थानिकदीर्घमात्रपरामर्शोनतुपूर्वसवर्णादीर्घस्यैवेतिक्लेशस्तुमुधैवेतिबोध्यम्॥रामानित्यत्रवक्ष्वचनइतिदीर्घेकृतेःनापइत्या

लोपस्तु न। पंचमीसमासेन स्थानिवत्त्वात्॥ बाध्यविशेषचिंतापक्षेपि पूर्वसवर्णदीर्घे कृते यथोद्देशे भसंज्ञाप्रवृत्त्या पूर्वान्तवत्त्वेनाकारां
तेभत्वे प्राप्तस्य लोपस्य वारणमुक्तरीत्या स्थानिवत्त्वेन सन्निपातपरिभाषया वा बोध्यम्॥ न कार्यमिति॥ नन्वेवं रमाणामित्यादौ अवर्णान्तत्वल-
क्षणनुटः चारितार्थ्यात् रामाणामित्यादौ तु परत्वात् बहुवचन इति दीर्घे नुड्विधौ अनुवर्तमानानापद इति लोपप्रसंगः॥ आपूर्वग्रहणस-
त्त्वेपि च वर्णान्तलक्षणो नुट् बहुवचन इति दीर्घापवाद इति न दोषः अत एव भाष्येपि न कार्यमिति नोक्तमिति चेन्न॥ चारितार्थ्येपि नुटः प्रति
पदोक्तत्वात् पूर्वप्रवृत्तेः पूर्वं दीर्घेपि पंचमीसमासेन स्थानिवत्त्वेन सन्निपातपरिभाषया वा लोपाप्रसंगोप्य॥ कथं कीलालपानां कुलानामि-
ति॥ भाष्यं तु सर्वेषामेकदेश्युक्तिरेवेति निपुणतरमालोचनीयम्॥ इत्यादंताः जसि च योगविभागस्येष्टसिद्ध्यर्थत्वात्॥ क्वचिदप्रवृत्त्या पू
र्वस्य गौरीत्यादिसिध्यर्थो योगविभाग इति बोध्यम्॥ शेषो घ्यसखि॥ यूभ्यामिति॥ यूपदहस्वपरानुवृत्तिफलितार्थकथनमदः अनवकाश-
त्वान्नदीति॥ ननु गवां पत्यै स्त्रियै इत्यत्र सावकाशत्वात्कथं नदीत्वस्य तत्त्वमिति चेदत्राहुः विप्रतिषेधे परं कार्यं ह्रस्वोऽपतिः समास एव
घिः षष्ठीयुक्तश्छंदसि वा यू॥ असखि ङिति नदी वा स्त्रियाः इयङुवङ्स्थानाव स्त्र्यामि च न॥ आख्याद्ह्रस्वं लघु इति न्यासभेदेन सावकाश
त्वेपि परत्वान्नदीत्वं बाधकं भविष्यतीति शेषग्रहणस्य स्पष्टार्थताबादिनामाशय इत्येके॥ परं त्वत्रारंभसामर्थ्यान्नदीसंज्ञापरकार्यत्वाच्च
घिसंज्ञेति भाष्यादिग्रंथयोजनैवतस्माद्यथाक्रममेव॥ ङिति ह्रस्वः पतिश्च समास एव घिः षष्ठीयुक्तश्छंदसि वा असखि इति न्यासेन सिद्धे

स·भ· सामान्यतोह्रस्वांतस्यविधानंनिरवकाशंविशेषतोविधानेलाघवंतुमत्यै·धेन्वैइत्यत्रबाधमंतराएवघिसंज्ञावस्थित्याप्रतिप्रसूक्तं।न
१०२ चसामान्यतोविधानेगवांपत्येसावकाशेमत्यैइत्यत्रपरत्वाद्बाध्यतेइतिवक्तुंयुक्तम्·उकारांतस्यसंज्ञाविधानंनकुत्रापिसावकाश
मितिधेन्वैइत्यत्रनदीत्वमेवेति·फलभेदइतिवाच्यम्·तदभावात्·उदंतस्यविधिर्व्यर्थइत्यस्यउकारानुवृत्तिर्नकार्येत्याशयः·उतत्त
द्विषयकंवाक्यंनोपलभ्यमिति।नाद्यः॥तस्याउत्तरार्थत्वात् नांत्यःतस्यविप्रतिषेधसूत्रप्रतिबध्यत्वात् इत्यन्येभाष्यप्रामाण्या
त्·ङितिस्त्रियांपतिशब्दस्यानभिधानमित्यपरे॥ङितिह्रस्वश्चेत्यत्राटश्चेतिवत्तूचकारःपुनर्विधानार्थस्तस्यानवकाशत्वमित्याशय
इतीतरे·वस्तुतस्तु·अहन्नित्यत्रवक्ष्यमाणरीत्यानवकाशत्वंसुस्थमेव पतिशब्देघिसंज्ञाप्राप्तियोग्यतासत्वात्नियमेनापिबाध
इत्यन्यत्·एतेनतन्यमतेपरमसख्यैस्त्रियैइत्यत्रापिसार्थक्यमित्यपास्तम्·असर्वनाम्नस्यप्रसज्यप्रतिषेधत्वांगीकारेणनङि·सं
बुध्योरित्येतत्तुल्यत्वात्·मास्त्रइतीति·अयमत्रमूलाशयः·यूस्त्रहणाननुवृत्तावपिह्रस्वपदानुवृत्त्याविश्वपादिशब्देनातिप्रसंगः·अदं
तस्यत्तुसत्यपिघित्वेक्षतिर्नास्ति·तथाहि·रामेणेत्यत्रइनादेशोनादेशापवादः·रामस्येत्यादौसत्यपिगुणेक्षतिर्नास्ति·इदानींकिंकृप राम:
रिभाषोपस्थित्यातदप्राप्तेश्च।अच्चघेरित्यत्रेदुद्भ्यामित्यनुवर्तत्तएवहरिहरौइत्यत्रद्वंद्वेघीत्यस्यविषयेपिनदोषः·अदंतेवेदजाघे १०२
वेतिनियमार्थत्वादजाद्यदंतमित्यस्य·ईदग्नेरितिज्ञापकाच्चनविपरीतनियमइति॥आङोना·रूपासिद्धेरितिप्रियत्रिणाकुलेनेत्या

दौविभक्तेर्हल्लादित्वाभावेनषड्भ्यश्चतुर्भ्योहल्लादिरितिस्वरासिद्धिरपिबोध्यातत्रस्वमतेविहितविशेषणाभावात्‌ नतुनमुनेइ
त्यस्यसिद्धांतेपिनकारेसिद्धत्वनिषेधकत्वेनरूपंसिद्धम्‌ अमुष्मैकुलायेत्यादितुनभवत्येवेतिचेत्तत्राह नमुनेइति विरोधादिति एवं
चनसोर्थः सिद्धांतेइदानींतुसत्त्वावश्यकस्तथाचामुष्मैइत्यादिप्रमितलक्ष्यविरोधः स्यादितिभावः। तत्रार्थेसूत्रसंमतिमप्याह॥ अतएवसू
त्रेति॥ नकिंचिल्लाघवमिति॥ नेइतिन्यासेपिनकारइत्यर्थःगीकारेलघुभूतन्याय्यनीतिन्यासत्यागोनिर्बीजः स्यादितिभावः औङ आपइ
तिसूत्रभाष्येऔविभक्तेर्ङित्वेखट्वेइत्यादौयाट्स्यादित्युक्तं॥ तदयुक्तंशीभावस्ययाडपवादत्वात्‌॥ अतोन्यरीत्यायोजयति॥ अतएवे
ति॥ हरिणामत्येति नञ्‌ कौण्डिन्यन्यायेननादेशस्यगुणबाधकत्वमत्रारुचिः नयाडिति हरीत्यादौगुणोनेत्यपिबोध्यम्‌ वेङितिदिगि
ति दिगर्थस्तुतत्रतद्भापत्तौतुडापत्तिः। सिद्धांतेहिपरत्वाट्टानुड्बाध्यते रमायामित्यादौङेरामियाडनापत्तिरपिबोध्यायदितत्रङे
र्ङीमुक्रियतेतदारमायामित्यत्रपूर्वंप्रत्ययत्वाभावेनेत्वाप्रवृत्त्याङकारयुक्तोएवादेशःकृतेवार्णपरिभाषयाप्याटिकृतेप्रत्ययादित्वा
भावादिलिङ् स्यनस्यात्‌ अनित्यत्वेनाप्रवृत्तौतुनमानं यदितूभयोरादेशत्वेएवसमानकार्यित्वएवसेत्यनुगमवादिमतमवलंबसे
तदासुपः संप्रत्तिङादित्वासंभवेन भौतपूर्विकंतत्‌ गृह्यतेवासुपीतिनिवर्त्यत्रतु ङवतेइत्यत्रैवप्रवर्त्ततवेत्यादिनानाविकल्पगतंकु
शोनिक्षिपामि यदिनिर्देशादिकंप्रदर्शयिष्यसितदाप्रतिपत्तिगौरवेणामीषयिष्यामिइतिपूर्लीमेवास्त्विति ङसिङसोश्च नासूत्रीति

स·भ· जयंतिभवंतीत्यत्रांतरंगत्वात्परस्पत्वेचः परेतिस्थानिवत्त्वेनगुणो पराद्वित्वेनङि त्वसत्त्वात् प्रकृतसूत्रेपिदोषोबोध्यः।पूर्वस्पेतुन
१०३ स्थानिवत्वम् पूर्वपरविधित्वात्॥अच्चघेः।ननुतत्प्रतिज्ञायां किंमानमत आह।अतएवेति· समत्वादिति·ननुदूतरेत्संज्ञकविशि
ष्टस्वरूपंशब्दस्येत्युक्त्या विशिष्टस्यविधानेप्रवर्णापत्तिरतदूत्संज्ञालोपोप्रार्थ्येते· अनित्संज्ञकतपरेतुत परसूत्रप्रवृत्त्यात-
काररहितस्यैवविधानमिति वैषम्यमितिचेन्न·भाव्यमानेनसवर्णाग्रहणांनेत्यनेनगुणाभेदकत्वादिप्राप्तस्यैवतपरसूत्रप्राप्तस्या
पिनिषेधध्रौव्यात्·अतएवकिमोदितिपक्षेतुनासिकोनेतिबोध्यम्॥फलभेदोनेति· नन्वौदादेशेद्वित्वेनाश्रयणीयमतोपिफले
कंनहिभाष्येऔदादेशोदिदिति·अदादेशोदिदितिवाकंठरवेणोक्तमस्तीतिचेन्न·द्वित्वमाश्रित्यतितीतिप्रत्याख्यानावसरेभाष्येऔका
रस्यतपरत्वानुक्त्यातेनफलभेदापत्तेरितिभावः।द्वित्वेनेति·अलोंत्यस्येतितुनानर्थकेतिनिषेधात् तत्प्रत्याख्यानेतुनदोष
इतिस्पष्टमत्रैवसूत्रेभाष्ये॥प्रदेशेष्विति· प्रसिमिचोष्टकेः वेरपृक्तस्य·सुतिस्यपृक्तंहलिस्येतेषुसूत्रेष्वितिभावः।हल्ग्यह
णेनैवेति· तत्राद्ययोरुक्तोदृष्टिर्लुकिहलीत्यतोहलीत्यनुवृत्तावपितदादिविधिप्रतिबंधायहलितिवक्तव्यम् तृतीयेतुवेरित्यनुना राम:
सिकनिर्देशमाश्रित्यापृक्तस्येतिभाष्यप्रत्याख्यानमितिनकर्तव्यम् हलङ्याब्भ्यइतिसूत्रेतुवर्ततएवेतिबोध्यम् अदृष्टार्थमिति· नन्वे १०३
वंहल्ङ्यादिसूत्रेतदंतविधिनाहलंतंसुद्दिसिलुप्यतेद्वित्यर्थेनहन्यादित्यादावतिप्रसङ्गः संज्ञाकरणेतुनतदंतविधिरितिदृष्टंफल

मू० न च निर्दिश्यमानपरिभाषया निस्तारः। सूत्रे षष्ठीनिर्देशाभावात्। यदि तु उक्तातिप्रसंगभङ्गाय षष्ठीनिर्देशः क्रियते तदाभिन्नादित्या
दौ ऽतिप्रसंगो दुर्वारः। स्यानिबद्धावविषये उक्तपरिभाषाया अप्रवृत्तेरिति चेन्न। सुप्तिसिहलिन्तिसुप्तिसिहलन्तिवा कर्मधारयनिर्दे
शे परनिपातनात्तस्य विशेषणत्वाभावनिर्णयेन तदंतविधेरभावेनातिप्रसंगाभावात्। षष्ठीतत्पुरुषस्तु न। निषादस्थपतिवत् गौ
रवात्। एतेनापृक्तग्रहणं चिन्त्यप्रयोजनमित्यादिशब्दरत्नादिग्रंथा व्याख्याता इति बोध्यम्॥ स्वन्त्यात्परस्य। भिन्नावयवाविति। अं
त्यावयवेत्यर्थः। अत एवाह। प्रातिपदिकान्त्यवर्णादेरिति॥ अन्यथा सख्युर्यो नकदूत्यलुक् समासेतिप्रसंगः स्यादिति भावः। लक्ष
णायेति। यद्यपि तदंतविधिकल्पनेनापि भाष्यमुद्द्योते योजितं तथापि वर्णसंज्ञापक्षे लक्षणावश्यकत्वेनात्रैसैवादृता। किंच
तदंतविधिकल्पने लिंगविशिष्टपरिभाषाया अप्रवृत्तये अनित्यत्वमाश्रयणीयम्। विभक्तौ लिंगविशिष्टाग्रहणमिति तन्निषेधप्र
वृत्तये कार्यकालपक्षे पदैकवाक्यता वा श्रयणीया स्यात्। लक्षणापक्षे तु वक्ष्यमाणरीत्या न्यायत एव तदप्रवृत्तिः सिद्ध्यतीति सैवा
दृतेति बोध्यम्। प्रातिपदिकं च वद्दुपस्थापकेति। ननु तद्दुपस्थापकत्वं विशेषणतया विशेष्यतया मुख्यविशेष्यतया वा सर्वसाधार
णे येन वाद्दृह विवक्षितं। नाद्यस्तौ सख्यवयवे लक्षणायामपि विशेषणतया सखिशब्दस्य भानसत्त्वात्तद्दुपस्थापकत्वध्रौव्येणाप्रवृ
त्तेः परिभाषाप्रवृत्तेर्दुर्वारत्वात्। अत एव न द्वितीयोपि। आनुपूर्वीनिष्ठप्रकारतानिरूपितविशेष्यतायां अपि सखिशब्दे सत्त्वात्।

तरङ्गइति नचाभीयान्तरङ्गस्यासिद्धत्वेपिपररूपस्याभावेनान्तरङ्गपरिभाषाप्रवृत्तिः स्यादिति एवंचसंप्रसारणस्यासिद्धत्वेपिपररूपस्यासिद्ध
त्वाभावाद्यस्येतिलोपइतिवाच्यं संप्रसारणाश्रयपूर्वरूपेणनिष्ठधर्म्मस्यातिदेशात् अतएवान्तरङ्गपरिभाषाज्ञापनपरभाष्यंसगच्छते
॥ अन्यथाबहिरङ्गसंप्रसारणस्यासिद्धत्वेपिपररूपस्यासिद्धत्वाभावात्तु घूपधगुणे विश्वौहइतिसिद्धौचारितार्थ्याभावेनासङ्गतत्वंस्पष्टमेव
वस्तुतः असिद्धवदत्राभादित्यत्रजातासिद्धत्वमेव अतएवभाधिकारेपरत्वादिनाबाध्यबाधकभावोभवति अतएवचनवीना अन्यथातेनेदंबाध्य
मुत्तानेनेतिविनिगमनाविरहः स्यादिति प्रकृतेनत्वभावादन्तरङ्गपरिभाषाप्रवृत्तिः स्यादितिचिन्त्यमेतत् नानर्थकइति ननुस्थानिवद्भावेनान्त्वाभा
वेप्यनन्तत्वंस्यादेवसुवन्तत्वमितिचेन्न अल्लोपोऽनइत्यत्रानोनिर्दिश्यमानस्यैवसत्वेनास्यैवात्रानुवृत्यात्राप्यनोनिर्दिश्यमानस्यैवग्रहणात् ॥ अ
र्थाधिकारानुरोधात् यद्वावैयधिकरण्येनएषामनङ्गत्यर्थोत्रसचनिर्दिश्यमानएवतस्यानुवृत्यातदन्तविधिरनन्तस्येत्यादिरितिनदोषः ॥ किंनु प्रत्य
यस्यलुकः घइतीति यदिघस्यान्तरतम्याङ्गकारः फलमपेक्षतइतितत्रत्रापिन्यासेगइत्येवोचितम् असयासिद्धत्वेनजश्त्वाप्रवृत्तेः प्रक्रियाला-
घवाच्च तथापिकैयटानुरोधेनघउक्तस्तदाशयस्तुविवरणेद्रष्टव्यः नचयथाकथंचिद्धकारस्यवकारान्तरतमत्वोपपादनेपिनशर्वैत्यत्रश
कारषत्वजश्त्वाभ्यांडकारेडकारान्तरतमत्वंदुर्वचमेवेतिकथमुच्यते नशर्वैत्यत्रघानुवृत्तावप्यदोषादितिवाच्यम् गृहंगंतुंप्रवृत्तस्यकपाटं
पर्य्योटयामेइतिन्यायेनतेनतस्यतद्धदेवसुवचतरत्वात् यद्वाझषस्तथोरित्यतः प्राक्कुक्तिनोघोन्तेनशर्वोझलांजशः इतिन्यासेनजश्त्वसुस्त

बहुव्रीहिणासमस्योपेक्षणीयत्वात्॰ पदस्य॰अंतइति नन्वन्तग्रहणंसुख्यार्थलाभार्थं तेनन्नइत्यत्रनदोषः तन्त्रान्तत्वस्यनिर्दिष्टत्वादितिचे न्न॥ उक्तार्थज्ञापनेमानाभावात् नपूर्वमित्यादावनुदात्तमित्यस्यानधिकारात् स्युत्तप्रथमेति॰ वस्तुतः परस्येत्यस्यानुपदमेवव्यधिकरणत्वो क्तेः विपरिणामकथनमयुक्तम् नचतज्वत्क्रोष्टुरितिवन्नाभिनभश्चेतिवच्चस्थान्यादेशभावकल्पनस्यौचित्यात्तिङन्तस्यानुदात्ताच्च आदे शोभवतीत्यर्थादुदात्तसाम्येनाद्युदात्तएकानुदात्तत्वोभयविशिष्टादेशापत्तिः पचतीत्याद्यनुदात्तत्वैकोदात्तविशिष्टत्वास्याद्यतः सर्वग्रह णेसर्वानुदात्तइतिकर्तव्यमेवेतिचेन्न॰तिङि॰तिभाष्योक्तज्ञापकात्तत्रतत्रान्तग्रहणाच्चात्रतिङन्तावयवस्यलक्षणीयत्वात्तिङित्यवयवस्यानुदा त्तत्वकइत्यर्थेविनिगमनाविरहेणसर्वथावयवस्यसिद्धेर्वैयर्थ्यमित्याशयात् नचतिङन्तावयवस्येतिस्थानषष्ठीत्वादादेः परस्येत्यापत्तिःए कैकावयवस्थानेनानुदात्तत्वविधानादादित्वस्यवक्तुमशक्यत्वात् आदित्वस्यसमुदायविधानेएवसत्त्वात् यदित्तत्रतत्रान्तग्रहणाद्यत्राघ वात्तिङ्समुदायस्यैवषष्ठीकल्पयित्वाविधानमित्युच्यते तदात्वादेरिति॰प्रवर्ततएवेति॰सर्वमितिकर्तव्यमेवेतिचिन्त्यमेतत् भस्त्रमिति॰न च्चतइग्रामेकंवत्सोमेस्त्वमितिच्छान्दसत्वस्यैवोदाहरणंनवाक्यस्येति अस्तुपर्युदासइतिवाच्यम् शालीनान्तेइत्यत्रच्छान्दसत्वस्यवक्तुमश क्यत्वात्॥ अन्येत्विति॰ नन्वत्वमित्यस्यापिसंबोधनेवर्तमानत्वेप्रथमैवस्यादितित्वामित्याद्यसंगतमितिचेन्न अत्रसंबोध्यत्वेनज्ञानवत्पदार्थयु ष्मदर्थः अतएवचेतनेऽस्यप्रयोगः अहमनेनसंबोधितइत्यचेतनस्यज्ञानवत्त्वाभावात् एवंचसंबोध्यत्वप्रकारकज्ञानवदर्थकत्वेपिनसं-

भेफलभेदाभावः नचैवमपिप्रक्रियालाघवाययोगेविधेयेघविधानस्यकोऽभिप्रायइतिचेच्छृणु दादेरित्यत्रतदनुवृत्तिसंभवेनविधेयानुपादा
नेलाघवमिति॥ तथाचैवंन्यसनीयं॥ चोःकुरित्यस्यानन्तरंनहोधः आहस्थः व्रश्चभ्रस्जहोढः दादेर्धातोः वादुहः क्विन्नन्तेनशोवोएकाचोव
शोदधस्तथोः झलांजशिति॥ ननुससुड्डमेव एवंतुनयुष्मदस्मदोरनादेशइत्यनादेशपदंयोचीत्यत्रैवक्रियतां इतितुनो तांरूपस्यसौलभ्यादि
तिचेन्न युष्मयतेयुष्माकमित्यत्राकारश्रवणार्थंतदावश्यकत्वात् अभिधानस्योक्तत्वात् नचपञ्चमीसमासेनस्थानित्वेनाश्रेष्ठव्यएव
अभ्यम्भ्यमोः फलभेदापत्तिरितिवाच्यम् पञ्चमीसमासस्यानित्यत्वेनतत्राश्रयणेनफलभेदाभावेप्यत्राश्रयणेमानाभावात् एवंदोषःसुष्ठु
एवेतिबोध्यम् किञ्चयुष्मदस्मदोरित्यस्यापिच चारितार्थ्येऽनादेशेचि॰हलिचोभयत्रापियत्वापत्तिरिति तत्राचीतिनकर्त्तव्यंस्यात् अत्रा
प्यनादेशसत्वेतुपरिशेषलब्धमेवतद्वतीतिनकार्य्यमितीदानींगौरवापत्तिः एवञ्चेदंसम्यगेवेतिबोध्यम् किंचयोचीत्यत्राप्यनादेशइतिमा
स्तुद्वितीयायाञ्चेत्यात्वविधानाज्ज्ञापकाददेशेऽचितदभावादिति इदन्तुपुनश्चिन्त्यम् आकमित्येव टिलोपेनसुटोऽप्राप्तेःससुड्डनिर्देशोव्य-
र्थः व्याख्यातमिति शेषग्रहणस्यपूर्वकर्त्तव्यतायाउक्तत्वाच्छेषग्रहणमनुवृत्त्येतिभाष्योक्तरीत्यास्वादिविषयेत्वमादेशवारणस्योचित्येनविप्रति
षेधकल्पनंभाष्यानुक्तंमूलकृतोऽप्युक्तम् एवंशेषग्रहणस्यस्वमतेस्पष्टार्थोक्त्यातदनुमानस्याशक्यत्वात् पूर्वविप्रतिषेधाश्रयणभेदेनापिनत
दप्यसङ्गतंएतदर्थंशेषग्रहणस्यावश्यकत्वाच्चेति चिन्त्यमेतत्॥ विग्रहेइति॥ नचविग्रहरूपाणामभावइतीदमयुक्तमितिविग्रहोयस्येति

बोधनार्थकत्वमित्यदोषात् नचैवमपिभवच्छब्दस्यसंबोधनार्थकत्वाभावात् भवंतमित्याद्यसंगतम् प्रथमायाएवापत्तेरितिवाच्यम् चेतना
चेतनसाधारणतयासंबोध्यत्वमात्रार्थकत्वेपिप्रवर्तनाविषयसंबोध्यत्वाभावात् अत्रप्रवर्तनाविषयसंबोधनस्यैवग्रहणात् हेभवन्नि
त्युक्तेहितस्यप्रवर्तनाविषयकंज्ञानंभवतिमयायत् किंचित्कारयतीतिभवानित्युक्तेतुममहृयक्रियान्वयिसंबोधनेप्रथमात्वंभवंत
मित्यत्रतुक्रियान्वयित्वाभावेनादोषः परंतुगदाधरेण क्रियान्वयित्वमस्योक्तम् वस्तुतएतादृशक्लिष्टकल्पनापेक्षयास्वेतिपदस्यस्व
रसतः सार्थक्यापत्त्यपूर्वोक्तमेवयुक्तमितिप्रतिभाति आमंत्रितं वाक्करणमिति नचतदभावेऽस्यादर्शनापत्तिः नचलोपेएवकार्येऽवि
द्यमानग्रहणेनाविद्यमानवदित्यर्थः लोपेषष्ठ्या आपत्त्याऽलोन्त्यस्येत्यस्यापत्तेः सर्वादेशार्थमावश्यकमेवेदमितिवाच्यं सर्वथालोपेतदर्थबोधेनैव
स्यादिति तद्बोधार्थं परंप्रयोगस्तुस्यादितीदंपूर्वप्रयोगाभावमात्रफलकं स्यात्तथाचराजदंतादिषुपरमित्युक्तं मामंत्रितमित्येवपरप्रयोगात् सिद्धेरि
दंव्यर्थमेवस्यादितिवत् करणार्थः प्रतिपद्यतेइति अयंवतिर्व्यर्थएव नचशिष्यमाणंलुप्यमानेतिन्यायेनसिद्धेपरप्रयोगाणामनावश्यक सजातीयविष
येतत्प्रवृत्तेः ननुव्यासइत्यत्र पूर्वलोपेविजातीयेनाप्यर्थबोधइति प्रवृत्तेपितथैवस्यादितिसर्वलोपार्थमावश्यकमितिचेन्न लोपपरइत्येवसिद्धेरा
मर्थ्यादित्यर्थसिद्धेः नचैवंत्रिपाद्यांप्रवृत्तयेचवतिघटितत्वमितिवाच्यम् तथासतिसन् इत्यस्याविद्यमानत्वेनतत्रङमुणनस्यादिति अनिष्टमेवापद्ये
तेतितत्प्रवृत्तेरिष्टापत्तेः नचैवंवत् करणमूलीकरीत्यात्रिपाद्यांप्रवृत्तिःस्यादितिपूर्वेङमुडनापत्तिः तर्हिपूर्वेणापरस्यप्रत्यासत्त्याग्रहणएवप्रवृत्तिःक

ल्प्यते॰ नाम॰ आमंत्रितात्परस्येति अत्रतत्रेदमित्यर्थः एवमननुगतरूपेणाकल्पनया आम् मोइत्यत्रापि आमंत्रितात्परत्वेनाश्रयणाभावेनात्र प्रसक्त्या
सर्वेनानुगतरूपेणादोषात् नचैवंप्रत्यासत्त्यैवनिर्वाहेवतिर्व्यर्थः प्रत्यासत्तित्वाभावार्थमिवावश्यकत्वात् इदमेवकेचित्स्वाश्रयमितिदिक्॥स्मरामीतिन
चपश्यार्थैरितिनिषेधः इन्द्रियजन्यएवनिषेधात् स्मरणस्येंद्रियजन्यत्वाभावात् संस्कारजन्यत्वात् यद्वासाक्षात्कारार्थकेतिनिषेधः स्मरणं
तुनसाक्षात्कारः मानसंध्यानंतुसाक्षात्कारवत् एवंमनसासाक्षात्करोमीतिसंगच्छते॥ इन्द्रियजन्यत्वंसाक्षात्कारत्वंतन्नास्यास्तीत्याग्रहेतुनिर्मा
गीकारएवेतिबोध्यम् निवृत्तिरिति ननुअयेइत्यस्यद्वंद्वोवत्त्वाभावात् अपादादावितिसत्त्वेपिनदोषइतिचेच्चिन्त्यमेतत् अग्नेइन्द्रवरुणे
ति वहुवचउदाहरणार्थमावश्यकमेवैतदित्यन्यदित्यादिवोध्यम्॥करोषीति॰सिवर्थोआश्रयःतेनैकाधिकरण्यरूपसामानाधिकरण्यमस्त्येव
ननुवृत्तीति ननुघटोघटमित्यर्थप्रवृत्तिनिमित्तादेर्गर्भस्याविवक्षणेपिघटः कलशमित्यादौघटत्वकलशत्वरूपप्रवृत्तिनिमित्तभेदमादायशाब्द
वोधवदत्रापि अग्न्यादिपदानामर्थपरत्वस्य पूर्वमुक्तत्वादर्थैक्येपिपूर्ववद्धर्मभेदोप्यस्त्येवेतिकिमर्थंननुग्रंथइतिचेच्चिन्त्यमेतत् परेतु अग्न्या
दिशब्दःशब्दपरएव अर्थपरेत्वेत्वेत्तानिते भ्येइतिपुनरभ्येइतिपरत्वेयथ्योपपत्तिः अभ्येएतानितवनामानिइत्येवस्वारसिकोर्थः नचैका
र्थबोधरूपसामानाधिकरण्याभावःतवनामानीत्युक्तेत्वदर्थशक्तिरिवाधितार्थोवोध्यते इतितत्सत्त्वात् नचपुनरर्थपरत्वंउच्चारणकालंशब्द
परत्वमेवतवनामानीतिवाक्यवोधोत्तरंतेषामेकार्थत्वेतिसामानाधिकरण्यंत्वनुवर्ततेऽर्थपरत्वंतुनेतिपूर्वग्रंथःचिंत्याशयोनन्वितिग्रंथइत्याहुः

स॰ भे॰ ॥ ननुसामानाधिकरण्याभेदान्वय्यर्थप्रतिपादकत्वमेवास्त्विति न दोषः न च देवकरोषीत्यत्राप्येवं वारणे आमंत्रितेइत्यस्य वैयर्थ्यं अपरमनुकूलमेवे
१२१ ति यद्वा तत्राप्यभेदान्वयेऽस्ति क्रियायामिष्टत्वात्तादात्म्यांगीकारात् न च त्वमीत्यनेनाभेदान्वयेपि न देवेत्यनेनाभेदान्वयः देवत्वमिति वाक्ये एकदेश
न्यायेन देवेत्येतन्मात्रप्रयोगे त्वंपदार्थस्य तत्त्वेन्नैवांतर्भावेनाभेदान्वयस्य सूपपादत्वात् करोषीत्यस्य सुंदरं करोषीत्यस्य सुंदरं करोषी
त्यर्थे प्रयोगे सुंदरपदार्थभेदस्य सत्वाच्चेतिचेन्न अन्यादिशब्दानां शब्दपरत्वेन वारणेपि अर्थपरत्वेन तदसत्वात् नन्वर्थपरत्वे विशेष्य
विशेषणरूपसामान्यवचनमप्यस्तीति कथं तेन वारणं सामान्यवचनमित्यस्याव्यापकधर्मावच्छिन्नमर्थः घटो नील इत्यत्र नीलापेक्षयाघ
टस्याव्यापकधर्मावच्छिन्नमेव प्रकृतेऽन्यादिपदार्थानां समाननियतत्वेनाव्यापकधर्मावच्छिन्नत्वमिति न दोषः अथ किमर्थं समानाधिकर
णे इति पदमिति चेन्न पाचकपाठकश्च युवां पचतमित्यादौ अव्यापकधर्मावच्छिन्नत्वरूपसामान्यवचनत्वस्य सत्वादापत्तिस्तदावश्यकत्वात् न
नु प्रथमांतपदातिरिक्तस्य समुच्चय एव नास्तीति संबोधनांतरस्यापि समुच्चयाभाव इति चार्थे द्वंद्व इति सूत्रे शेखरे उक्तत्वादिदं प्रत्युदाहरणमसं
गतमिति चेन्न उष्ट्व उष्ट्वेति मनोरमादिषु प्रामाण्य प्रयोगे युष्मदतिरिक्तसमुच्चयस्वीकारे बाधकाभावात् तत्र समानाधिकरणपदमपि मानमस्तु रामः
इति दिक् निपातनैरिति ननु युजादिषु निरुपपदेपि निपातनसत्वात् कथं साहचर्येण सुबुपपदत्वलाभ इति चेन्न सर्वत्र लाक्षणिकस्य निपातन १२१
स्य सत्वेन तत्साहचर्यादस्याप्यलाक्षणिकत्वसुबुपपदकत्वरूपनिपात्यतेइत्याशयात् अनिड्त्वं त्वंज्ञकेति ननु अबुद्ध अनापत्तिः न च तत्र

लोपोऽनिष्ट एवेति वाच्यं दूरादूतसंज्ञा वाच्येति वार्त्तिकस्त्वेतत्र लोपस्य जायमानतया तद्व्याख्याने दूतसंज्ञके कारांतत्त्ववदनापत्त्या फलभेदप्र
त्याख्यानानापत्तेः यद्यपीदित्यदस्य शब्दरूपाध्याहृतं तदंतविधिना दूतसंज्ञकेकारांतभिन्नत्वेन न दोषः न च रेफ वांत एवेकारः॥ तदंतविधिघ
टित वाक्यार्थसामर्थ्यादिदंत्येदितो ग्रहणात् तथापि एकदेशे शब्दाध्याहारस्य कर्तुमशक्यत्वे दोष एव न चेदितो नेति प्रसज्येत तत्संभवः॥ प्रसज्यसा
त्वे हस्यमानत्वादिति चेत् पर्युदास श्रित्य एव किंतु प्रसज्येत शब्दस्वरूपाध्याहाराणां तदन्तविदोषदृति तत्त्वं न प्रवृत्तिरिति अनंत्यविकार इ
ति प्रत्ययाप्रत्ययविशेषणादिति भावः व्याख्यानादिति चोदितिलिंगात् अचूप्रत्याहारग्रहणेहि तस्यासंभव एव स्यात् न च वर्गग्रहणं तत्रेति वा-
च्यं हुचेति वैयर्थ्यापत्तेः अन्यथा सर्वस्य परे दीर्घस्येव सत्त्वे दीर्घादित्येव सिद्धेऽसंगतिः स्पष्टैव न चोत्तरपदे इत्यधिकाराच्च वर्गेषूत्तरपदे एव दीर्घ
सत्वादुत्तरपदाभावे च्छेचेति चरितार्थं तर्हि चाविन्त्यत्रस्वरितेनाधिककार्योद्युगग्रहणं चुदूतिपठितस्य चग्रहणं चेति तत्त्वम्॥ अनभिधानमिति
तृतीय इत्यत्रेव प्रयोजनस्य भाष्ये कथनात् विषगः अत्र चावित्येवकृत्वाऽप्रत्ययग्रहणं न कार्यमिति केचित् कुकमारावितिपठित्वात्तदपिव
क्तव्यं नास्तीत्युक्तं न च गणग्रहणापत्तिः कुआदिसमुदायघटके उत्तरपदे इत्येवमर्थस्य विलंबोपस्थितिकतया कुआदिर्यस्य तस्मिन् उत्तर
पदे इत्यर्थस्य शीघ्रोपस्थितिकतया तदभावादित्याहुः निपातनादिति कुचिदंतो दानस्यापि स्यानित्वात् याद्दशप्रयोगेप्राप्ते अन्याद्दृ प्रकरण
रूपस्याभिमत्त निपातनाभावादिदं चिन्त्यम् अभेदकाभेदका इति स्त्रीकर्तृमते तु युक्तमेवेति तत्त्वम् अदसोऽसेः न दोष इति ननु अदकयत्तेः

स·भ· क्विपिमुत्वापत्तिरितिचेन्न निर्दिश्यमानत्वाभावेन वारणात् नचाबाजूविषयेनसा तस्याः तिङंतविषयादावेवप्रवृत्तेरुक्तत्वात् नचैवमप्नुकेइ
१२२ त्यसंगतंतस्यासाधुत्वात् परंतुक्विवंतेपीष्टमेवमुत्वमितिनाप्नुके इत्यसंगतमित्याहुः॥शब्दांतरेति· दीर्घेकृतेन ह्यंतेरभावेन ह्रस्व स्यापिशब्दां
तरप्राप्तिकत्वमितिचिन्त्यम्· परनिमित्तकत्वेनेति· सुस्रूर्षति·सुस्रूषति इत्यादावप्युक्तांतरंगत्वात् ह्रिग्वेऽभ्यासेउकारश्रवणानापत्तिरिति
ताहृशांतरंगत्वं चुंचुपूचणायोर्येकु वृद्धिकृतलक्ष्यभेदानाश्रयणमिति॰ एवोच्यतेत्रविषयेजातवहिरंगस्थलेएव· ननुसमकालप्राप्ति
केइत्युक्तम्॥ एवंचप्रकृतेपिनान्तरंगत्वमितिचिन्त्यमेतत् यद्वाउदवोढामित्यर्थेमेकव्यक्तिवृत्तिविकारकृतलक्ष्यभेदानाश्रयणमित्ये
वोच्यते॥ प्रकृतेतुव्यक्तिद्वयवृत्तिर्दीर्घइकारस्यभेदएवेतिनलक्ष्येलक्षणन्यायप्रवृत्तिः॥ ॥ननूषतुरित्यत्रव्यक्तिद्वयवृत्तित्वात् पुनर्द्दि
त्वापत्तिरितिचेदेवंवक्ष्यामः पूर्वोक्ताकारस्यनपुंसकत्वमुत्तरस्यतुपुंस्त्वंतयोः समाहारे सुपोधात्विति अपेक्षयापूर्वेदीर्घेह्रस्वइष्टसिद्धि
रितिचिंत्यमेवैतत् ऊ कालइत्यपिचिंत्यमेवतन्मतेप्युकराणांसवर्णग्रहणात् असंदेहायह्रस्वोच्चारितइतिचेत्तत्वंप्रकृतेपिवाध्यमिति वस्तुतस्त-
त्वीकारेसनासंशेत्यादावापत्तिः आदेशएवेत्युक्तेतुसंकोचएवदोषःस्यात् किंचोदुपधायादित्यत्रानयैवसिद्धेप्रश्लेषपरभाष्यविरोधःकिंचभा राम:
व्यभानेनेत्यत्रस्वरितातिरिक्तविशेषणान्निषेधाप्राप्त्यावैयर्थ्याभावः अष्टादशानांग्रहणंतुनतत्रप्रयोजनाभावात् स्वरमात्रस्यैवोपयोगात् किं १२२
चतपरप्राप्तस्यनानयानिषेधइतिपथिमथीत्यत्रशेखरेउक्तत्वात् तपरकरणंचरितार्थमेव किंचादसोमादित्यत्रनेनप्रश्लेषसिद्धौप्रयोजनाभावः न

चद्कारेएवप्रगृह्यार्थंचरितार्थम् अत्रापि अदसः अमुः आदेशविधानेनैवसिद्धे गुरुपन्यासादेवतत्सिद्धेः अमुकेइत्यत्रसर्वादेशापत्तिस्तु न
तस्यासाधुतायाउक्तत्वात् अदमुयङ्‌र्थेन तत्राद द्रङ्डूइत्येवसिद्धान्तयिष्यमाणत्वात् अतएवद्वयंनाश्रयणीयं वेत्यन्यत्रविस्तरः॥ मेवाव्रश्य
कमिति इदंतु नत्वंभसंज्ञापदत्वरूपेणशास्त्रीयेपिभवतिन पदंतुभाष्यादितिनलोपइतिसूत्रेपियचिभमितिभ्यामिप्रवृत्त्यापदत्वप्रतिबंधात्न
लोपाभावार्थंकार्यकालत्वंयुक्तमेव किंचाष्टाध्यायीकृतपरत्वाश्रयणात् परत्वात् भसंज्ञैवेतिनदोष इतितत्त्वम् एवंचभाष्यमपिनैकदे
श्युक्तिः अंगेनप्रत्ययाक्षेपस्यसर्वत्रोक्तेः प्रत्यय इत्युपस्थित स्यानोविशेषणाच्च उत्थिताकांक्षत्वमत्रनिरस्तं तत्तम् अतत्वविषय इति तेन-
अत्वविषयस्यापिसंग्रहः॥ मानाभावादिति अत्रगुरुचरणाः कचिदंत्यसदेशानंत्यसदेशयोः प्राप्तिप्रसिद्धे अंत्यसदेशोपस्थितिरत्रोत्वस्य
तथात्वेपिनप्रवृत्तिः अवधारणगर्भानंत्यसदेशस्यैवविकाराभावात् अमुमित्यत्रास्यापिप्राप्तेः मकारादावपिनप्रवृत्तिः एकप्रयोगे दद्रिशब्दे
त्यसदेशानंत्यसदेशयोः प्राप्त्यभावात् रेफेणाव्यवधानादंत्यसदेशत्वाभावात् अतएवोक्तं एकेइतिभाष्यप्रयोगउपपन्नः अन्यथांत्यसदे
शत्वाभावात् मुत्वानापत्तिः तस्माद्प्रवृत्तिरेवयुक्तेति नाप्यदमुयङिति भवितव्यमितिभाष्यविरोधः तत्र अःसेरितिपक्षेएवंभवितव्यं तन्न
स्यादिति शंकायामुक्तंचेतिसमाधानेनादोषात् समाधानंतुकेचिदिच्छंति वस्तुतस्तुयेनेत्येवेतिभाष्याशयेनादोषात् तस्माददद्रङ्डू-
इत्येवंषंनद्वयमितिसिद्धांतमाहुः॥ अतएवहिःप्रयुक्ताइतिसुधियः॥ समोमिङिति ननु अकचिकृतेविशिष्टस्यादेशार्थंयथान्यासएवास्तुइतिशं

कावसर इति चेन्न सर्वनामसाहचर्येणाव्ययादपि वाचकत्वरूपप्राधान्ये एवमप्रवृत्तिर्नेतु द्योतकस्थले प्रकृते तु समो द्योतकत्वान्नाकचः प्रसंग इ-
तिनान्यर्थात् ननु नलोपो नञ इत्यत्राशिन्न्यासेऽ कब्राह्मण इत्यत्र दोषदानसाहचर्येणाभिप्रेतमिति चेदुच्यते उपसर्गस्यायतावित्यत्र भा
ष्येणोपसर्गविषयेऽकचोऽनभिधानात् तत्रहि अयतावित्युपसर्गविशेषणं रेफस्य वा आद्ये परे प्रतिषेधः अंत्ये प्रतेरपूर्वविधिरित्युक्तमू य
द्यकच् उपसर्गस्यानहापरिवदकच्यपि निषेध आवश्यक इति तदुक्त्याऽनभिधानमावश्यकमित्याहुः तिरसः अत्र तिर्य इति अतीति अती
तिबाखु इति केचित्॥ अयं विचारः आद्ये अमंचतीत्याङ् इत्यत्राकारपरत्वादापत्तिः अलोपग्रहणे तु एकादेशापहृतरूपलोपसत्त्वेन नापत्तिः
द्वितीयेपि· अ इत्यस्यानुकरणे प्रकृतिवदनुकरणेनेति पक्षे अ आङ् इत्यत्र· अपदांतादकारादतो गुणे इति पररूपे आदेशः स्यात्· अलो
पग्रहणे नूक्तरीत्यादेश इति न दोष इति चेन्न· अतीत्युक्ते आडि त्यत्र दोषतादवस्थ्यात् अतः पक्षद्वयं तु सर्वथा एवेत्याहुः॥ नांचेः रूढस्ये
ति· ननु प्राचीन इति विशिष्टरूढत्वस्यादृष्टत्वेन वक्तुमशक्यत्वाद्यौगिके नलोपानापत्तिः पूजाया अगम्यमानत्वादिति वाच्यम् प्राचोक्तं परं क
चित् पूजयोपारीयाते कचिन्निंदायां च लोपयुक्तः प्रयोगः पूजायां तु नकारसहित एवेति केचित् अपास्तमिति· वस्तुतउत्तरार्धे नकारस्या
वश्यकत्वेनात्र नियमगौरवेणाच तदयुक्तमेवेति भाति· एतेनांचु गतावचि पूजायामिति पठ्यते इदित्वादेव नलोपाभावेन नांचेरिति सूत्रमेव
व्यर्थमित्यपास्तम्· पूजागम्यत्वेपि नलोपापत्तेः अंचुग्रुसिक्रुंचामित्यनेकारकरणादचि इत्यस्य अग्रहणापत्तेश्च उकाराकरणेन तस्यापि ग्र

हणे अचिङ्त्वे केऽलत्वस्याप्यापत्तेः तत्राकारांतत्वाद्यनुबंधकत्वादग्रहणमिति चेद्गौरवमेवेति दिक्॥ नोपधायेति॥ क्रुंच्यादित्यत्र आशीर्लिङि
नत्वं तत्र नोपधप्रयोजनं क्रुंच्यादिति तत्र कुचिङ्नीदित्पाठेनापि सिद्धमिति क्रुंचेति पाठो व्यर्थः स्यादतोयं न नोपधः कथं तर्हि नुत्वमाशंकितं तत्-
र्हि तत्र भाष्यात् कुत्वविषयेऽनुस्वार परसवर्णत्वयोः सिद्धत्वमेव प्रतिपाद्यताम् आशीर्लिङि क्रुंच्यादित्येवरूपमस्त्विति चेन्न चिंत्यमेत
त् श्रात्वदिति ननु अत्तप्रत्ययांतात् एव निपात्यतां किमनेन गुरुभूतेनेति वाच्यम् अत्तप्रत्ययस्य प्रकरणे पठितत्वाभावात् पूरणगुणेति
निषेधार्थमपि श्रात्वदित्यतिदेशस्यावश्यकत्वाच्चेत्याहुः॥ अत्वसंँ अनुवादकमिति॥ वस्तुतस्तच्छ्रूयमाण सत्प्रतिपत्त्यर्थं तेन चंद्रयतेः
क्विपि चंद्रमित्यत्र न दीर्घः णिलोपस्य तु न स्थानिवत्त्वं दीर्घविधौ तन्निषेधात् टिलोपः स्यादिति मतेऽदोषेण कथं तदुपरि व्याख्यानेन निर्वाह
इति दोषोदत्तः एतद्वचनेन निर्वाहादिति चेन्न इदमपूर्वं वचनं किंतु व्यइत्यस्य त्व आदेशस्थानिवन्मूलकः छुणकारघटकत्वमारोप्य
ते इत्यारोपमूलको वा तत्राद्येऽनेकांतवादिनामुपरि न दोषः अंत्ये तु स्वावयवावयविनि स्वघटकत्वमारोप्यते इति तदावयवत्वस्येवाभा
वेन तदवयविनि तद्घटकत्वस्यारोपेपि नमशक्यत्वव्याख्यानाश्रयस्यावश्यकत्वमिति न विरोध इति यत्किंचिदेतत्॥ अत्रेदं तत्त्वं नोपधा
याइत्युपधापदाभावे प्रकृतेक्तत्तेनुमि दीर्घस्य चारितार्थ्यसंभवात् तक्कौंडिन्यन्यायेन दीर्घेण नुमो बाधापत्तिः तत्सत्वेऽनवकाशत्वाद्बाधेपु
नरुत्सर्गप्रवृत्तिर्भवतीति न दोष इति सुधियः केचित्तु परमोपदेशिकात्वं तत्स्थभार्थमनुप्यपिहलेत्यमिति संस्कारानंतरमानुमानिकादेशत्वंस

स· भ· मत्स्यैवेति· अपि तु उपसंख्यानं नापूर्वमित्याहुः नलोपिन इति· यथा अश्रुते प्राङ् ब्राह्मणीत्यत्रोगित इति ङीबापत्तिः उभे लक्ष्यानु इति वस्तुतस्तु
१२५ उभशब्दस्य द्वित्वावच्छिन्नबोधकत्वादुद्देश्यतावच्छेदकद्वित्वरूपमेकमेवेति न वाक्यभेदः किंच विधेयतावच्छेदकभेदेन वाक्यभेदेऽपि उद्देश्य
तावच्छेदकभेदे वाक्यभेद एव न यथा घटपटौ स्त इति अत्र ननु गर्गा इत्यत्र शातनिष्ठस्वत्वनिष्ठस्वत्वनिवृत्तिविधेयाधारत्वस्वत्वनिवृत्तिपूर्व
कत्वा स्वत्वप्रकारकेच्छाया दंडनपदार्थत्वात्· एवं च तिष्ठतेरेकत्वेपि विधेयतावच्छेदकं यत्नत्वम्· तथा च वाक्यभेदादेव वाक्यभेदो न तु वि
धेयतावच्छेदकभेदादिति स्वीकारेण प्रकृते विधेयताया अभेदेनादोषात्· यद्वा स्वत्वं न विधेयतावच्छेदकमानंत्यप्रसंगात्· अपि तु स्वस्वत्वेना
नुगतरूपेणेति न विधेयतावच्छेदकभिन्नं· न च शतनिवृत्तिर्गर्गेषु नास्तीति वाच्यम्· एकदेशद्वारा सत्वादित्यलम्· असत्तीति· प्रयोजनाभावेस
त्यशब्दार्थप्रयोजनकथनस्योपहासपरत्वादिति भावः॥ अन्तरंगत्वादिति· वस्तुतो वोभवत इत्यत्राभ्यस्तस्वरानापत्त्येदं आयनसूत्रविषय
कमेव· अन्यथा अंतरंगत्वादयादेशे तदाश्रय एवाभावेन तद्विचारासंगतिः एवं चांतरंगत्वादित्ययुक्तमेवेति बोध्यम्· किंचेत्यप्ययुक्तमेव· अज
सुरित्यत्र जुसश्चारित्यार्थेन सामर्थ्याभावात् सामर्थ्यमूलक एव प्रवृत्तेः तत्रापि शबभ्यस्तसंज्ञाद्यपेक्षया बहिरंगत्वादंतिः स्यादेवेति सामर्थ्य राम:
रूपपादमिति॥ केचित्तु· न दोष इति· वस्तुत एतस्मिन्नित्यत्रैकादेशे परादिवत्त्वेन सत्वेप्यभ्यस्तत्वाभावः न चैकदेशविकृतन्यायेन तत्त्वं तस्य फला १२५
भावेनानाश्रयणात्· अत एव स्थानिवत्सूत्रे इमामुपन्यस्यैकदेशविकृतस्येति वक्तव्यमित्युक्तम्· तत्र वक्तव्यं भवतीत्येव फलमुक्तं न लक्ष्य

सिद्धिरूपमुक्तं भाष्ये· तदाश्रयणे वाऽर्द्धविकारे तदप्रवृत्तिरेवेति अत्राभ्यस्तत्वाभावादेव न दोषः एवं च समासानाश्रयणेपि न क्षतिः अभ्यस्ताद्धि हिते
न वारणं तत्त्वयुक्तमेव जुहुवतुरित्यत्राभ्यस्तत्वानापत्तेः साहचर्यमपि पूर्वमुक्तमित्यलम् केचित्तु देवदत्तादयो भोज्यन्तामिति स्वीकारे प्रत्येकमर्थाप
त्तिरित्युभयग्रहणमित्याहुः॥ चिन्त्यमिति· केचित्तु बहुव्रीहिफलत्वेन मानम् स्तमिति भाष्योदाहरणेन अपवादत्वं युक्तमेव अन्यथा रज्जुसृड्भ्या
मित्यत्रेव षत्वापत्तेः न च कथमुपयट्काम्यतीत्यत्र षत्वं बहुव्रीह्यभिधेयापेक्षावधित्वस्य सृजो निरूपपदलक्षणस्य प्राद्युपसर्गोपलक्षणस्य चा
श्रयणेनादोषादित्याहुः॥ तन्निषेधाश्चेति· ननु पदचरमावयवविधायकातिरिक्तस्य ग्रहणादत्राप्रवृत्तिरेव स्यात् नपदान्तेति सूत्रशेखरविरोध
श्चेति चेन्न लोपसमाननिमित्तकपदचरमावयवविधायकातिरिक्तस्य तत्र विवक्षणमित्याशयात् ननु क्वौ लुप्तमित्येव दोषइति वाच्यं पिपठिष
तेः क्विपूनिमित्तकात् लोपस्य क्वौ लुप्तत्वाभावात् तस्यासार्वत्रिकत्वाच्च पदसंज्ञानिमित्तकप्रत्ययनिमित्तकाभावादेशविषयत्वस्य वा परि-
ष्कारेणादोषात् तस्मिन् प्रत्यये परे यो लोपः तस्मिन्प्रत्यये परे एव कार्ये कर्त्तव्ये इत्यर्थे वा न दोषः तद्धितनिमित्तकलोपातिरिक्तलोपो न स्थानिव
दित्यर्थो वा तेन पटयतेः पडित्यत्र जनयतेः जन् ततो जातइति लोपनेन जञ्ज्ञानइति अत्र ष्टुत्वं सिद्धं अन्यथा निषेधाप्रवृत्त्या लोपस्य स्थानि
वत्त्वात्तदनापत्तिरिति श्रूयमाणप्रत्ययनिमित्तकपदचरमावयवातिरिक्तइति वा निवेशनीयइति सुधियः॥ ॥नुम्स्थानिकइति· शरिति प्रत्याहा
रग्रहणमात्रमानं तदभावे केवलानुस्वारोपलक्षणार्थमेव नुम् ग्रहणमावश्यकं शरग्रहणे तु केवलानुस्वारस्य तत्घटकत्वेन ग्रहणे सिद्धे तु

मूग्रहणंसामर्थ्यात् तत्स्थानिकानुस्वारोपलक्षणार्थंनुम्मुद्दृस्तु नगृह्यते विसर्गसाहचर्येण अयोगवाहस्यैवग्रहणात् नुम्स्थानिकानुस्वा
रएवपर्यवसन्नइतिबोध्यम्॥ नडिति· नन्वत्रसंयोगादिलोपेनतस्यासिद्धत्वेनपुनःसंयोगान्तलोपस्यप्राप्तिरेवेतिचेन्न· तत्रकौडिन्यन्यायस्य
त्रिपाद्यांस्वीकारेणादोषात् एतन्मूलकमेवयंप्रत्यपवादत्वंतस्यासिद्धत्वेनइत्युक्तम् इदमेवत्रिपाद्यांन्यायप्रवृत्तौमूर्द्धाभिषिक्तोदाहरणमित्यलम्
षत्वस्यासिद्धेति अन्यथाषढोःकइत्यापत्तिः तर्हितन्निमित्तलोपातिरिक्तनिवेशपदचरमावयवेतिननिवेशनीयमित्यपिलाघवमिति पडित्यत्रतुन
दोषः श्रूयमाणतद्धितेति निमित्तत्वादिति दिक् विस्तरइति· ननुमधुश्च्योततीतिमधुगितिकथमितिचेदयंसोपधःतेनसंयोगादिलोपइष्टसिद्धिरि-
तिकेचित्·दिधगिति·ननुदिहहितिउपदेशाभावाश्रयणं नापिदहित्युत्तरखंडस्योपदेशत्वम् आगंतूनामंतेनिवेशइतितस्यतत्त्वाभावात् नच-
स्थानिवत्त्वेनविशिष्टतत्त्वं· स्थानेद्धित्वानंगीकारात्· किंचस्थानिवत्त्वेनोपदेशोग्रहीतुमशक्यः नचभवतइत्यत्रादुपदेशत्ववदत्रस्थानिवत्त्वेनतत्त्वंस्या
देवतत्रप्रत्ययस्यनिमित्तत्वेनाश्रयणात् अदुपदेशप्रत्ययकालिकोग्राह्यइति तत्रस्थानिवत्त्वेनतदाश्रयणेऽपि·अत्रकस्यापिनिमित्त
त्वेनानाश्रयणात् उपदेशप्रत्ययकालिकस्यस्थानिवत्त्वेऽप्युपदेशस्यग्रहीतुमशक्यत्वेनहलंत्यमित्यत्रैवस्वभावसिद्धोपदेशस्यग्रहीतुमशक्यत्वा
दुपदेशत्वाभावात् इत्स्वाभावएवप्राप्तइतिचिन्त्यमिति एवंचदिधइतिजैमिनीयोक्तमेवयुक्तमितिसुधियः॥ वसोः·वसुसादेशेनेति· नचैवमपिवसु
लभेइत्यस्यैवग्रहणंस्यादितिवाच्यम् सामान्यग्रहणेनेकानुबंधस्यधातोरपीतिज्ञापनार्थइतिसकलेष्टसिद्धिरित्याशयात् एतेनवसोःस्थानि

वत्वेनैवागित्त्वेलब्धे उकारानुबंधवसोः सामान्यग्रहणार्थं भविष्यति ॥ तं भाष्यारूढमधिकसकारानुबंध नोत् संजनव्यर्थमित्यपास्तम् प्रत्ययाप्र
त्यययोः प्रत्ययस्यांगीकारादितिकेचित् उकारोच्चारणसामर्थ्यादस्यापिग्रहणम् अपिनाएकांतत्वादेकस्योपस्थितत्वादन्यस्यैवप्रत्ययस्यैवग्रहणौ
चित्याच्च धातोरग्रहणंपरिभाषांविनापिजातमिति अपिकेचिदाहुः नचैवंक्वसदितिसाहचर्यात्तत्रसूत्रेधातोर्ग्रहणापत्तिः अत्रवसोरिति प्रत्य
यस्यैवग्रहणात्तत्रापितस्यैवग्रहणौचित्यात् सांतेतिविशेषणाच्च नहिधातोर्विशेषणेफलमस्ति ॥ सर्वत्रसांतस्यैवसत्वेनाव्यभिचारादित्तिदि
क् परेत्विति वस्वेकेत्यस्यापिप्रतिपदोक्तत्वमितिचेत् सदइत्यवस्थायामेत्त्वलोपाभ्यामेवप्रतिपदोक्तत्वात् संप्रसारणेनबाधइत्यन्यत्र
विस्तरः ॥ पुंसो॰ वस्तुतइति॰ गौरवादेतनुक्तं युक्तं भवति ॥ अदसः ॥ प्रसिद्धेरिति॰ नचतत्क्रन्यायेनसिद्धिः इत्यादिसिद्धयेतदादिविषयेतदप्र
वृत्तिस्वीकारात् ननु अनंत्यग्रहणप्रत्याख्यानेइदमेवेतिनियमेप्रकृतेऽस्यंयदिस्यात् दकाराभावेनसनियमोऽसंगतः स्यादतस्सामर्थ्यादत्व
नप्रवर्तत इत्यदोषः किंचपरत्वात्त्वेसकृद्गतिन्यायेनत्यदाद्यत्वमितिसुवचमेवेतिचेन्न तत्प्रत्याख्यानपक्षमादायैतत्ग्रंथप्रवृत्तेः वस्तु
तस्त्यदादीनामइत्यत्रविभक्तीतिविषयसप्तमीविहितविशेषणादिगौरवात् सैवचिंत्यमित्युक्तत्वात् एवंचसकारस्यात्वेपररूपे ओडादेशेटि
लोपइतिन्यायेनपुनरत्वाप्रवृत्त्याऽदोषात् नचपररूपात् पूर्वमेवांतरंगत्वात्लोपेऽसकाविन्त्वत्रटापि अोडः स्याद्यापत्तिः ओकारविभक्तित्वा
दितिवाच्यं द्विवचनौकारविभक्तेरेवौङितिसंज्ञास्वीकारात् प्रत्ययस्यादितिइत्वापत्तिरितिचेत् ङित्वसामर्थ्यात्पररूपानंतरमेवटिलोपस्यवक्तव्य

स॰भ॰ त्वात् अन्यथासोरैरित्येववदेवं चेदं चिन्त्यमित्याहुः॥ नमुने॰ ननु मुग्रहणमास्तु इति चेन्न॰ पंचानाममुनेत्यत्र नाभावे कृते न लोपस्यान्यथासिद्धत्वनिषेधा
१२६ पत्त्याऽर्थान्तरत्वेनामेवांवर्णमितिस्वरापत्तेः नेष्टत्ते व्यवहितस्यैवासिद्धत्वनिषेध इति न दोष इति चेदत्र ने ऽ इत्यस्य विषयसप्तमीत्वे नौपश्लेषिकस
त्त्वभावेन तस्मिन्निति परिभाषाया॰ अप्रवृत्त्याव्यवहितत्वां शास्त्रलब्धुं शक्यत्वादिति दिक्॥ इति हलन्ताः पुंल्लिङ्गाः॥ पक्षे इति पदस्यादिरि
ति पक्षे तु गतिकारके तिकृदंतेन समासे पदत्वाभावेन निषेधो नेति तत्त्वम् वस्तुतः पंचमीसमासेन हसेनाविन्यत्र निघातापत्तिरिति बोध्यम्॥ अ
पो॰ व्याख्यानादिति॰ सानुबंधकपरिभाषायाउभयोः सत्वे शास्त्रीयग्रहणमत्र तु लौकिक एव संभवतीति भावः न च प्रत्ययाप्रत्यययोरिति न्यायेन दो
षः तदभावात् अद्भिरिति निर्देशाच्चेत्याहुः॥ इति हलन्ताः स्त्रीलिङ्गाः॥ उत्तरपदत्वे। ननु कार्यित्वनिवेशे फलसत्त्वेपि प्रमाणाभाव इति चेत् पदा
दिविधाविति पर्युदास एवावेहि॰ तथाहि पूर्वकाला व्यवहितकालवृत्तिर्हि पदादिविधिर्यथा सेचइति॥ सकारस्य पूर्वेकालाव्यवहि
तकालवृत्तित्वं एवं च तत्साहचर्यात्परकालाव्यवहितकालवृत्तिरूपपदांतकार्य एव॰ तथा च कार्यित्वनिवेशोऽर्थात्फलितः यद्वाऽत्राभाववृत्तित्वे
न साहचर्यं यथा सदित्यत्र प्रागभाववृत्तित्वं तथा च ध्वंसवृत्तित्वं पदांतकार्य एवेति न पदव्यवायेपीत्येतद्विषये प्रवृत्तिः॥ अभावप्रतियोगित्वे राम:
न वा साहृश्यमिति न दोषः नच पदादिविधिर्नान्तेत्यादौ णत्वविधौ पूर्वस्याभावेन पूर्वकालाव्यवहितकालवृत्तित्वं बाधितमिति वाच्यम् उ १२६
त्तरपदत्का॰ कार्ये पदादिविधेस्तथात्वेनारोपात् ननु पदप्रयुक्तकार्ये उत्तरपदीयेकर्तव्ये पूर्वपदीयपदत्वस्यापि निषेधादिति चेन्न॰ उत्तरपदी

येनेति निवेशेनोत्तरपदसंबंधिनिकार्ये इति निवेशेन वा दोषात्॥ अत्रान्यकार्यित्वादिफलमुक्तं ङमुट्सूत्रे। अनभिधानमिति। अभिधानं हि
गतिकारकेति सुबुत्पत्तेः प्राक् समासेऽपदत्वात् न निष्ठः स्यादिति भावः मसलिखितइति ननु मधुशब्दात् यजन्ताद्बहुवचने जसि यञोलुकि
ह्रस्वस्य गुणो भवति तत्र पदत्वादेङः पदान्तादिति दुर्वारं नचानेन निषेधः उत्तरपदत्वाभावात् एतत्प्रत्याख्याने तु यञादौ सर्वनामस्थाने
पूर्वस्या॥ परत्वन्निषेधेनादोषादिति चेन्न उत्तरशब्देन उत्तरपदं न लक्ष्यते किंतु दृष्टिचरमवर्ति तथाच प्रकृते निषेधसौलभ्यमिति वोध्यम्
युक्तं चैतत् अन्यथा प्रत्याख्यानेऽस्मादेवाचार्यकिंपि शापि मधवति शंभवतीत्यत्र गुणे कृते पूर्वरूपापत्तिः अत्र सर्वनामस्थानाभावेन
तस्य निषेद्धुमशक्यत्वात्॰ मन्मते दृष्टिचरम एव सदिति निषेधः स्पष्ट एवेति दिक्। संबध्यत इति। ननु तत्संबंधे एनयोरित्यत्र चारि
तार्थ्यात् सामर्थ्यात् लुकालुप्तेपि इत्यसंगतमिति चेन्न। प्राचीनानुरोधित्वात्। तस्य स्वमते ह्येकवचन एवेति बोध्यम्। इदमत्रतत्त्व
म्। एनोनवक्तव्यः सचतत्रन्यायेन त्यदाद्यत्वबाधः त्यदादिविषयेऽप्रवृत्तेरुक्तत्वात् यदि सोपि न दोषावहः एतदेव कर्तव्यमिति भगवतः सिद्धान्तस
त्वेन देवकर्तव्यमिति शंकितेऽपरे यद्येनत् क्रियते तर्हि एनोपि न कार्य इति तदुपर्युपहासपरं यातत्सार्थक्यादिति सुधियः॥ ननु उपसर्जने तकारचा
रितार्थ्यमतः सामर्थ्याभावद् इत्यत आह। अनयोरिति॥ अहन्। निषेधेनापीति। अपिना तक्रन्यायः ननु निषेधविषये चारितार्थ्यात् तक्रन्यायो गरिष्ठ
इति चेन्न ब्राह्मणेभ्यो दधि दीयतां नरात्रौ तक्रं कौण्डिन्यायेत्यत्र बाधदर्शनात् नच वाक्यद्वयकार्ये वाक्यत्रयकरणसार्थक्यात् बाधोस्तु अत्र किंगम

स॰ भ॰ कमितिवाच्यम् ब्राह्मणेभ्योगौडेभ्योदधितक्रंश्वसमस्तुमलंवदइत्यत्रवाक्यद्वयेपिबाधदर्शनात् अप्राचीनग्रामानहस्ता आम्रायेवर्हिणस्तेन्यपोध
१२७ इत्यत्रचदर्शनात् ननुनङि इतिनिषेधंपर्यालोच्यनलोपइत्यस्यसंकोचेप्राप्तिरपिदुर्लभेतिचेन्न संकोचस्यवाक्यार्थकालिकत्वेनवाक्यार्थात्पू
र्वमेवचव्याप्यव्यापकज्ञानसत्वेनपूर्वशास्त्रस्यैतद्बाधज्ञानादेतद्विषयसंकोचसुलभतयादोषात् निषेधशास्त्रस्यचप्रतियोग्यपेक्षत्वेनपूर्वत-
त्संकोचाभावात् नचाहयतेः क्विपि अहइत्यत्रनान्तत्वाभावात्कथंनान्तप्राप्तिपरिकल्पनमहन्शब्देइतिवाच्यम् पदान्ताहन्शब्दस्यसर्वत्र-
नान्तस्यैवसत्वेनतस्यतद्व्याप्यतायाःसौलभ्यादितिदिक् विभावयन्तुसुधियः॥ऊर्गिति इयमूर्जीतिवैदिकप्रयोगात् अस्यस्त्रीलिंगत्वेनपुंनपुं
सकयोरेवेतिनप्रमाणमितिक्विवन्नकर्त्तरि वहूर्जीति ननु अनइत्येवकृत्वातस्यैवानुवृत्त्यासिद्धेःप्रत्याहारग्रहणंव्यर्थमितिपूर्वपक्षश्चेदयमप
रोक्तइतितत्त्वम् अचइत्यनुवृष्यइकइतिनकार्यमितितुन औङःश्यामित्यारंभेणसन्निपातेनपरत्वेनऔङ्भ्यसःओः सु अहोषपिसप्तम्येकव
चनेकारान्तेपिनुमापत्तेरितिदिक्॥षाण्मासिकइति अयमपपाठः।ठनिषण्मासिक इत्यपेक्षितत्वात् तुम्बेति वस्तुतःसर्वनामस्थानत्वमेवनन
पुंसकत्वादितिचिन्त्यम् अन्वेति॥समासे॥भूतशब्दस्यपंचशतपरत्वमेवमक्षिशब्दस्यविंशतिपरत्वम् अन्यथाभूतादेःपंचद्विसप्तसंख्याकत्वेन राम॰
चतुर्दशसंख्यात्वस्यैवापत्तेः॥आच्छीपरोयःशतेति इदमेवयुक्तम् अन्यथाशतभिन्नावयवेत्यर्थेपिशतकारेसमुदायावयवत्वमादायाप- १२७
त्तिरेवस्यादितिशतभिन्नावयवार्थवान्ग्राह्यइत्युक्तेगौरवंस्यात् पूर्वान्तत्वेनतस्यअन्नार्थवत्वंतत्रैवप्रवृत्तिरन्यत्रतुनेतिकल्पनंचेति नचात्र

न्मतेव्यपवर्गाभावः परत्वेनदृष्टोयःशृतेतिव्याख्यानेनादोषात् उक्तगौरवेणास्याकिंचित्करत्वात् इत्याहुरिति उक्तभाष्यद्वयविरोधः कथंपरि
हार्यइतिचिन्त्यम् अन्येतुवृद्धदिषः आकृतित्वंतत्रणेष्वेवप्रसिद्धमितिवृद्धिरुपधीत्यस्यप्रतिपदविधित्वेपिचर्मणितदप्रसिद्धेः प्रतिपदविधित्वा
भावाच्चर्मण्णोनित्यस्यपरत्वात्तत्प्राप्तौपूर्वविप्रतिषेधारंभइत्येकेऽत्रपरिहरन्ति अन्यत्रशीघ्रोपस्थितिकत्वान्नित्यविहितेष्वचप्रभृतिभिः
कपोवाधसंभवेपितथाविधकपूर्वविधेरप्रवृत्तिपक्षेऽन्ड्डजातुरित्यत्रपाक्षिककपोनिष्टस्यापत्तौभाष्यतात्पर्यान्तरः किंतुह्रुद्धौह्नीभेति-
पाक्षिकोऽजुरित्याहुः अपरेतुलोहितान्मण्णावित्यनेनपुंसिचारितार्थ्येनस्त्रियांप्रतिपदिविधानमात्रात्लिंगबोधकप्रत्ययबाधेप्राप्तेक्रियमा
णात्र्लोहिताल्लिंगवाधनंवेति तद्वार्तिकत्तद्विरुद्धोक्तभाष्येद्वयेप्येकदेश्युक्तित्वंकल्प्यतः तुल्यन्यायात् प्रकृतेप्राप्तस्यापिदीर्घस्या-
कृतव्यूहपरिभाषयानुम् अकारनिष्ठोपधात्वस्यविनाशोन्मुखत्वेनदीर्घाप्रवृत्तेः स्वंपीत्येकमेवेत्याहुः इतिनपुंसकलिंगाः॥स्वरादि अप्राप्तेरिति
ननुचादयःअनुदात्ताइत्येवंपाठेनतत्रनदोषः ननुस्वरादयोऽसत्त्वेइतिपाठेस्वरादीनामसत्त्वेएवाव्ययत्वापत्तिः अव्ययमितिमहासंज्ञयासिद्धांते
पिअसत्त्वेएवेष्टत्वात्तुसत्त्ववाचकानांतुकचित्सतिगमकएवेतिनदोषइतिचेन्न तत्रचचादयइतिपदद्वयकरणेननिपातप्रदेशेषुचादिपाठेनगौ
रवापत्तेः यदिसंज्ञाप्रदेशेषुनिपातादित्यव्ययमित्युच्यतेतदानसिद्धांतेनसममेवस्वरादिसूत्रेनिपातग्रहणंनकार्यमितितु अत्रपक्षेलाघवं न
चोपसर्गादीनामाद्युदात्तानापत्तिःस्वादित्वाभावादितिवाच्यम् चादिगणेएवोपसर्गाइत्यारभ्याधिरीश्वरेइत्यंतपाठेनचादित्वसिद्धेः प्रादयइतिचन

कार्यमितिचलाघवं नचचादीनामप्युपसर्गगत्योरप्याप्तिरूपादिग्रहणस्यनियमार्थत्वात् नचकर्मप्रवचनीयेष्वपिउपसर्गगत्योरप्याप्तिरुपसर्गा
दीनांगणेपाठत्वेननिपातवत् कर्मप्रवचनीयत्वाप्राप्त्यापिसमावेशइतिवाच्यम् कर्मप्रवचनीयाइत्यत्रकर्मप्रवचनीयाएवेतिपठित्वागत्यादिवाध
सिद्धेः अन्ययोगव्यवच्छेदोहि एवकारेणस्वघटितपदत्यागे एवनिवेशेचकिंलाघवमितिचेदेकंपदंकार्यमितिविशेषः इदमत्रतत्वं स्वरादयो–
व्ययमित्येवसूत्र्यतांचादयोपितत्रैवपाठ्याः चादीमादयएवउपसर्गाइत्येवकारेणोपसर्गादिवाधश्चादीनांचादयआद्युदात्ताइत्येवचपाठ्यम् अ
सत्वइतिपठित्वाचादीनांपाठः कार्यः तत्रकर्त्तव्योवा तथाचचादयोऽसत्वेइतिप्राग्रीश्वरान्निपाताइतिस्वरादिनिपातमित्यत्रनिपाताइतिचनकार्यमि
ति· एतत्पक्षेपिपातपदमनुक्तमपिलाघवं निपातएकाचइत्यादिषुचादयइतिपाठेचगौरवेपिसप्तपदाकरणात् मात्रालाघवंत्वतिशयितमेव·
नचसंज्ञाकृतंलाघवंतदनाश्रयणस्योक्तत्वात् ननुस्वरादिषुचादिपाठेस्वरादेराकृतिगणत्वात् अतिरिक्ताव्ययानामसंभवेपाठेतेषांचादित्वस्या–
प्याप्त्याद्युदात्तापत्तिरितिचेन्न आकृतिगणोऽन्त्यएवपाठ्यइत्यत्रविनिगमकाभावेनचादितः पूर्वमेवतेषांपाठेनादोषादितिप्रक्रियाचातुर्यवतांप
रममधुरइतिमात्सर्यमुत्सार्यविचारयंतुसुधियः॥सत्ववाचकात्वइति·॥स्वरादिषुसत्ववाचकत्वेप्यव्ययत्वस्वीकारादितिचिंत्यमिति पाठकस्तु– 
चिंत्यः गमकेएवतत्स्वीकारात् वामिति यद्यपिविभक्त्यन्तार्थेनतसाहचर्यंतथापिप्रकृत्यर्थेनतत्वम्॥तत्तदर्थेति·यद्यप्येकस्यैवद्विरुक्तत्यापीदंसिद्धं 
तथाप्येकतच्छब्दस्यप्रकृतिपरत्वेनैकस्यप्रत्ययपरत्वेनतदसंभवः नचतस्मिन्नोरित्यत्रतदित्यस्यतस्यादित्यर्थकेनप्रथमांतविदित्यनेनसा

मानाधिकरण्याभावाद्द्वंद्वो दुर्लभः परिनिष्ठितविभक्त्यासमासेनादोषात् नहि द्वंद्वसूत्रे शेषइत्यस्यानुवृत्तिर्येन प्रथमान्तानामेव स स्यादिति भावः
अत्र केचित् यद्विभक्तिसमानानुपूर्वीकत्वं तद्विभक्तिसमानार्थकत्वमेव प्रत्यासत्त्येति वामित्यादीनां पाठं विनाऽव्ययत्वानुपपत्तिरित्याहुः॥ साधी
यइति॥ अश्वसाधीयइति भाष्यात्॥ सर्वेति॰ अत्र विभक्तिपदं त्रित्वे पर्यवसन्नं प्रत्येकमेकवचनादावितिभावः द्वितीयेवेति॰ द्वितीयायाः कर्मत्वमे
वार्थतात्पर्याद्यर्थापेक्षत्वम्॰ त्रयाणामिति॰ अन्यथा कपिंजलाधिकरणन्यायेनायमेकः इमेत्रयइत्यपेक्षाबुद्धिरेवचतुष्टयजनिकाः प्रथमोपस्थि
तत्रित्वावच्छिन्नबोधनेनैव बहुवचनसार्थक्येन द्वैयर्थ्यस्पष्टमेव अत्रेदं तत्त्वम्॰ सर्वविभक्त्येकवचनत्वांगीकारे गंगादानयेत्यत्र सर्वविभक्त्ये
कवचनापत्तिर्नहि तथाचानुभवः॥ तस्मादेकैव विभक्तिस्तत्र स्वस्थिताः इत्यत्र सप्तम्येव स्वर्गतइत्यादौ पंचम्येव एवं च सुप् इत्यादौ हि प्र
त्याहारश्चरितार्थः तत्रतत्र सप्तमीपंचम्यादेर्लुगर्थत्वात् तदुक्तासर्वविभक्तित्वमयुक्तम् उक्तयुक्तेः नच येषामपादानादिर्नास्ति तेषां
तु सर्वैकवचनापत्तिरितिवाच्यम् अर्थेप्रथमेत्येव वक्तव्ये प्रातिपदिकग्रहणात् प्रथमैवेत्यदोषात् कर्मादियोग्येत्यर्थस्तु न प्रातिपदिकप
दवैयर्थ्यापत्तेः किंच पचतिकल्पमित्यादौ स दुर्वारः विशिष्टकर्तृत्वस्य केनाप्यनुक्तत्वात्॥ कृन्मे॰ संज्ञायामपीति॰ अतएव कृत्तेभ्य एषामि
त्यादिसिद्धिः आद्येयेन विधिस्तदंतसंज्ञाप्रतिपदाद्यत्वस्यासिद्धत्वापत्त्यादं तत्त्वापत्तिः अंत्येगुरुसंज्ञाप्रतिदीर्घस्यासिद्धत्वात्तस्याप्य
नापत्तिः वस्तुत अव्ययीभावश्चेत्यत्र सामर्थ्यात् महासंज्ञायास्त्यागेपि एतद्विषये महासंज्ञायास्त्यागे मानाभावइति सुधियः॥ अयंभावइति॥

स॰ भ॰ ॥ नन्वस्यवस्तुतः कल्पेननवैलक्षण्यम् अत एव ध्वननपरत्वेन तदर्थलापनं कुर्वन्तीति केचिदिति चेन्न अयं भावः कल्पे सामानाधिकरण्य
१२९ संबन्धेन लिंगान्वयित्वं विशिष्टस्य न केवलस्येत्याशयः द्वितीये केवलस्यापि तेत्याक्षेपात् ननु तथापि वस्तुतो ग्रंथे नात एवेत्यसंगतं तत्प्रत्याख्यान
रीतेरभावादिति चेन्न सर्वनामसंज्ञासाहचर्येण स्याप्यन्यार्थत्वेन प्रत्याख्यानेनादोषात् प्रधानन्यायोपन्यासस्तु चिन्त्यः वृद्धो यूनेत्यादिगमके
एवतत्प्रवृत्तेरिति दिक् उच्चैराविति अकारो वासुदेवस्तस्मादेप्रत्ययः परादित्वेन सुपूत्वे एवमिदम्शब्दात्तभ्यामिद्वितीयमपि न च समासे उप
सर्जनत्वमेवेति वाच्यम् कुगतिसमासे उभयपदार्थप्राधान्यात् उच्चैरभ्यामित्यादावदोषात् ननु प्रत्ययग्रहणपरिभाषयैवात्र लुक् न प्राप्नो
तीति कथमनभिधानमिति चेन्न अंत्ये स्त्रीप्रत्यये चानुपसर्जनेनेति निषेधादिति कश्चित् प्रत्येकमेवेति स्वरविशेषादिति शिवम् ॥ हयग्रीवपदां
भोजद्वंद्वकारुण्यमूर्त्तये ॥ मयाश्रीरवरचंद्रस्य रचिता वरचन्द्रिका १ चन्द्रिकायामव्ययानि समाप्तम् ॥ ॥श्री॥ ऋद्धा चेति ॥ निरूपितमिति ॥ नच
महाशूद्रसमुदायस्य निषेधेपि अवयवाट्टाप्स्यादिति वाच्यं असमहत्पूर्वग्रहणवैयर्थ्यापत्तेः नच ॥ समुदायनिषेधेऽवयवादुत्पत्तौ ढक् अव
यवादेवेति तत्फलमिति वाच्यं स्त्रीवाचकेभ्य इत्यर्थे समुदायादवयवास्यप्राप्तौ वृक्षप्रचलनन्यायेनावयवादनुत्पत्तेः नच कुंभकारेपोप्याप राम:
ह्येतेति भाष्यविरोधः एतन्न्यायेनाऽवयवादनुत्पत्तेरिति वाच्यं स्त्रीप्रत्ययांतादित्यर्थस्यैव सिद्धांतत्वात् परंतु अनुपसर्जनाधिकारेण तदंत- १२९
विधौ महाशूद्रीति न स्यादित्यमहदिति निषेधः नच शूद्रशब्दार्थस्य स्त्रीत्वाभावः महाशूद्रइति स्त्रीत्वविवक्षायामपि नागेशमते टाबनापत्तेः

सिद्धेः नचतत्रदीर्घोत्रैवह्रस्वः त्तांतीयीकीइत्यसिद्धेः प्राचांष्फ तत्तुष्फ इवविधेयः किंतङ्कित्तग्रहणेन ङित्त्वसामर्थ्यादास्तुरेरूपसंख्यानमित्तिसिद्धमिति
चेन्न संहितापाठेङिरपिसंभाव्येत्तकिंचतस्याद्धमात्रिकत्वेनाऽविशेषात् किंचगौरकष्याष्प्राब्दाद्गर्गादियञन्तप्रकृतिकक्रौड्यादिष्यङ्
न्तप्रकृतिकचावंताननद्धिवक्ष्यायांभस्याढइतिपुंवत्त्वार्थं तस्याऽऽवश्यकत्वात् नचभाष्येतत्प्रत्याख्यानमितिवाच्यं तद्वदस्यापिकृतप्राय-
त्वात् प्रत्याख्यानेषाघञइतिचापिगोकक्ष्यातस्मात्ष्फ इतिसिद्धागोकक्ष्यायणीनचगोकक्ष्यादितिस्यात् ष्फस्यचाणोऽपवादकत्वादि
तिवाच्यं प्राचांष्फइत्यत्रसर्वत्रग्रहाऽनुवृत्तिस्तच्चबाधकविषयेपिप्रवृत्त्यर्थं गोकक्ष्यादितित्तु उदीचांमतेएवंचगोकक्ष्यायाः प्रतिषेधो
वक्तव्यइतिसम्प्रसारणनिषेधकंवार्त्तिकमपिनारंभणीयमित्यपरमनुकूलं टिड्ढाणञ्टिड्डाद्यवयवेत्ति नचटिदाद्यवयवोकारइत्युक्तेका
रस्य प्रत्ययत्वात्तदंतग्रहणाऽभावेनप्रातिपदिकविशेषणेनैव तदंतविधौपरमकुरुचरीतिनस्यादितिवाच्यम् एकस्मिन्नपितदंतवि
धौटिदाद्यवयवाऽकारांतत्वस्यप्रत्ययाप्रत्ययग्रहणेप्रत्ययग्रहणइत्यस्याऽप्रवृत्त्यासमुदायेपिसत्त्वात् नचैवंबहुकुरुचरेत्यत्रापिवार-
णार्थमनुपसर्जनाऽधिकारस्यचारितार्थ्येनज्ञापकत्वाऽसंभवइतिवाच्यं टिदित्यादिप्रत्ययग्रहणेनतदंतग्रहणेन टिदंतमित्य
र्थात्समुदायेतदभावेनाचारितार्थ्यात् टिदाद्यवय वाकारांतमित्युक्तेतुपरिभाषाबाधःस्यात् तथाचटिदंतात्तंयदकारान्तमित्युक्तेपंचाम्वे
ति प्रत्ययाऽकारष्टिदाद्यवयवोग्राह्यइत्याकलनीयं परेत्विति नचक्वचिदनन्तविधावितिनिषेधइत्यस्याऽभावेनचक्राणइत्यत्रस्यानिवत्वे

नटित्वाट्टेरेत्वं स्यादिति वाच्यम् टित्त्वदित्यत्र तङामित्यनुवर्त्तने टिदन्तस्तङां टेरेदिति न्यासेन वाऽदोषात् नच ङिदादेशानां नङित्त्वमित्यस्याभा
वलविशिष्टेत्यत्र गुणो नस्यादिति वाच्यं लिङ्सिचावित्ति कित्त्वविधानाज्ज्ञापकात् क्वचिन्नङिदादेशानां ङित्त्वमित्युच्यमानत्वात् ह
लउपधायाइति नच सामर्थ्याद्व्यवधानेपि भवति गार्ग्यायणीत्यत्र तु येननेति न्यायेन नदोष इति वाच्यम् उपधापदानुवृत्तेर्वचन-
कल्पनापेक्षया लघीयस्त्वात्। षः आदिरुपरंजकेति अविमह्योष्टिषच् इत्यादावनायासतो वारकत्वयेति केचित् नादेशादिति न
चेत्संज्ञा भवतु लोपं वाधित्वाऽऽदेशः स्यादेवेति वाच्यम् इदिति महासंज्ञया लोपं विना संज्ञाऽप्रवृत्तेः सर्वत्र सर्वेषामिति फलितार्थः सप्तम्यास्त्वनुत्पत्तेः
आवट्यायनीति प्राचांष्फस्तद्धितः सर्वत्रेति न्यासेन सिद्धम् एतेनापकर्षः परास्तः आरंभसामर्थ्यादुत्तरसूत्रे नित्यत्वसिद्धेः नच माण्डूकस्यास्य
न्तत्वेन ङीप्प्रसङ्गः इति टाप्ङीपोरिति सुगम इति वाच्यम् कौरव्यसाहचर्येण गोत्राणां नमात्रस्य ग्रहणेन तत्र जातिलक्षणङीषा बाधादिति सुधियः
विभाषा। वहवो वृषलपत्यइति नचात्र प्रयोजनादनुपसर्ज्जनादिति ज्ञापनाऽसंगतिः अत्रैव कर्तव्ये तत्र करणात् नचात्र विशिष्टस्याऽनुपसर्जन
त्वमेव॥ सपूर्वपतिशब्दत्वाभावात्॥ पतिशब्दे समासकाले वहुवृषलेत्यस्याऽनवयवत्वात् नदंतस्येति नास्त्रि मूलोक्तदोषात् समासस्येति तु 
नास्त्रि बहुच्पूर्वेऽनापत्तेः वहुवृषलपत्नीत्युनदोषः प्रत्यासत्त्यापतिशब्देन केवलेन जातस्य समासस्यानुपसर्जनस्य ग्रहणात्॥ ऋन्नेरितितुनो 
क्तं पतिप्रिवमनुष्यापत्तिरित्यत्रापत्तेः व्यपदेशिवत्त्वेन सपूर्वत्वात् सपूर्वग्रहणं तु वृत्त्यभावे चरितार्थं त्रीण्येतिकुंभकपाललोहिनीत्यत्र न प्राप्नोत्यनड्

यंव्याख्यागृह्यमाणविशेषणमितित्रिघेनीत्यर्थोबोध्यः सपत्नीतिनिपातान्स्त्रीविशेषएवेत्यर्थः सूर्य॥ सूर्यादीनामंगानामित्यर्थेसौरीनस्यात् यग्रहण-
मितिसूर्यमानयतीति सूर्याणीत्यत्रैकादेशेऽकारस्यसूर्यसंबंधित्वादुपधात्वाच्चलोपः स्यादित्यावश्यकमितिकेचित् उपधात्वाभावान्नेत्यपरे
उपमितिविसारिणोमत्स्यइतिनिर्देशोऽसंदेहाययङावित्येववक्तव्यत्वाद्बासपत्न्याअग्रहणं नक्षत्रवाचकादिति व्यावर्त्यंत्वतिष्यसंज्ञकपुरुषस्य
इदंतैष्यमित्याहुः दंष्ट्राइत्यस्याजादौपाठः अपरइति कमण्डलौइतिमेदिन्यापिठरेत्विति पिठरमितिकोशस्यसंकोचेनाननुगतत्वाज्जातित्वमि-
त्याशयः वस्तुतएकेनकोशेनकोशद्वयसंकोचस्यानुचितत्वात् कोशद्वयेऽपिकमण्डलावितिकोशेउपलक्षणतयाव्याख्यापत्तिः एवंचअमत्र
सामान्यपरत्वेनाननुगतत्वान्नजातित्वमित्यप्रासङ्गीषएवविधानंननियमइतिबोध्यं नीत्याप्रनित्यत्वप्रतिपरोक्तस्येतिबोध्यं वोतोगुसत्वेनिविशते
ऽपैति पृथगिति अभावेऽतिव्याप्तेः सत्वेनिविशतइति जातावतिव्याप्तेरपैतीति आत्मनिष्ठधर्मेतिव्याप्तेः पृथगिति आश्रयेऽतिव्याप्तेरक्रियाज
इति क्रियानामकृतिसाध्याजन्यस्यक्रियात्वात्तस्यचनिषेधः अत्रेदंबोध्यंमानेनुगणलक्षणमभिहितमाकडारादित्यत्रभाष्येत्वगुणवचनलक्षणम
भिहितमेवंचविरोधाभावादिहविशेषणसार्थक्याद्भाष्यंत्वयोजमित्येकदेश्युक्तित्वं चिन्त्यंस्पष्टंचेदंशब्दरत्ने मुचिशब्देकृदिकारादितिस्यादि
त्याह प्सुत्नेति: नचसंयोगोपधत्वेननिषेधः खरुसाहचर्येणसंयोगोपधेतिनिषेधोऽप्युकारान्तस्यैवेत्याशयात् वस्तुतःश्यामेत्युदाहरणीयं प्रिय
कन्तिरिति नषट्स्वस्रादिभ्यइत्यस्यस्त्रियांयत्प्राप्नोतीति व्याख्यानेनात्राऽपिनिषेधइदंफलंचिंत्यंसुगंधिरितितुफलम् पुराणशब्दस्यासंततत्वमि

सं॰भ॰ ङिङीबूङीषोः स्वरे विशेषाभावदुत्युक्तं पुंयोगस्त्रियां वर्त्तमानस्येति पुंस्येवेति नच ज्येष्ठाकनिष्ठेत्यजादिनिपातनं व्यर्थं ङीषोऽप्राप्तेः पुंस्येवविधम
१३७ नत्वाभावादिति एवस्याप्रयोजकत्वात् अतएव शुक्लीति पुंयोगे सिद्धः महद्भिमिति नच स्वार्थे परिपूर्णपदार्थोत्तरमाकांक्षत्वदूतिन्यायेन
सुबुत्पत्त्यनंतरं महत्त्वविवक्षायां ङीबूजायमानः सुबंतात्स्यादिति वाच्यं प्रातिपदिकादित्यधिकारेण तद्व्यवहितोत्पत्त्या सुबंतेपि दोषाभा
वात् तद्धिते तु प्रातिपदिकप्रकृतिके लक्षणया सुबंतादेवोत्पत्तिरिति ज्ञेयं यवनात्लिप्यां यवनशब्दस्य यव नलिपेरौपचारिकत्वेन तस्येद
मित्यणोप्राप्त्या तत्रैतस्य चारितार्थ्येन यवनानां लिपिरित्यत्राणा बाधकः परत्वात्स्यादिति बोध्यम् एवं चाणा बाधकोङीविति बहव एव ग्रं
थाश्चिंत्याः अयं पुंयोगेपि ङीपू कालीत्यत्र नजानपदेति सूत्रे वर्णग्रहणात् अन्यथा वर्णादिति सूत्रे कालादित्युक्त्या वर्णे एव तादृशरूपसि
द्धेः नचतेन ङीबूभवतीति अनुदात्तः स्यादिति वाच्यम् कालशब्दस्यान्तोदात्तत्वेनोदात्तस्वरेण ङीषूङीपोः स्वरे विशेषाभावात् यदि तु वर्णग्रह
णं मात्रागौरवात्पदगौरवमिति ज्ञापकतया चरितार्थमित्युच्यते तदा पुंयोगे ङीषेव एवेति बोध्यम् अं वांवेति नच पदादादिरित्यर्थे गोस्थद्वत्य
त्र सुबुत्पत्तेः पूर्वं समासेपि निषेधप्रवृत्त्यापत्त्यार्थमावश्यकमिति वाच्यम् पदस्यादिरित्यभिप्रेत्य प्रवृत्तत्वेनाऽस्य चिंत्यत्वात् एवश्च नियमार्थत्व राम॰
मप्रयुक्तम् हृदिस्थद्वत्यपि पदादादिरिति विग्रहेणैव सिद्धमिति ज्ञेयम् अस्वांग अस्वांगादिति बहुव्रीहिविशेषणेपि न स्वांऽङ्गं यत्रेति विग्रहेणासु १३७
रापीतीत्यादिसिद्धौ दोषाभावेन पूर्वग्रहणस्य स्पष्टार्थमेवेति वाच्यम् उत्तरसूत्रेन स्वाङ्गं यत्रेति कर्त्तुमशक्यत्वेन स्वाङ्गाभिन्नात्परं यत्स्वाङ्गं तदन्ताद

नुपसर्जनादित्यर्थे कल्याणपाणिपादेत्यत्रापत्तिः स्यात् पूर्वपदग्रहणे तु यत्स्वाङ्गं न तत्पूर्वपदं यच्च पूर्वपदं न तत्स्वाङ्गमित्यदोष इति बोध्यम्
स्वाङ्गाच्चेत्येकविभक्तीति शास्त्रीयमुपसर्ज्जनमेव ग्राह्यम् अत एवापराश्वेतकेशाश्च अपरकेशाः आ ईषत् अपरकेशादिति विग्रहे आप
रकेशीत्यत्र पराद्विवद्भावेन आपरेति पूर्वपदं तस्मात्परं स्वाङ्गं केशेति शास्त्रीयोपसर्जनकमिति ङीष् भवति लौकिकाऽप्रधानत्वग्रहणे
तु तत्र तदभावेन ङीष् न स्यादिति कृत्रिमन्यायेन शास्त्रीयस्यैव ग्रहणमुचितमिति बोध्यम् एवञ्चाऽप्रधानत्वं चेति ग्रन्थश्चिन्त्यः समुच्च
यार्थे वेति सुधियः शिखेति प्रत्युदाहरणमिति न चोपसर्जनादित्यस्याऽभावे बहुव्रीहेरित्यनुपसर्ज्जनादित्युभयमपि प्राप्तं तत्राऽनुपसर्जना
दिति संबंधे सुशिखेत्यत्र टापं बाधित्वा ङीप् स्यादुपसंजनिष्यतीति न्यायेनेति सम्यगेव ग्रन्थः अशिखेत्यत्रापि न सहनञिति निषेधः अस्य शिखेत्ये
वं भाष्याऽभिप्रायादिति वाच्यम् अतएवेत्यत्र वृत्तौ शिखेत्यत्र टापं बाधित्वा ङीप् स्यान्न तु सुशिखेत्यत्रोपसंजनिष्यन्न्यायस्य सामर्थ्यमूलकत्वात्
शिखेत्यत्र चारितार्थ्यादित्येतदंशे यसङ्गतिरिति कश्चित् वस्तुतउपसंजनिष्यन्न्यायस्याऽपि प्रवृत्तिरिति सम्यगेव मूलाभिमतम् जातेरँदेनदंतेः
तिव्याप्तेः समानकालिकाऽनेकव्यक्तिवृत्त्यनुगतसंस्थानव्यंग्येति तत्र समानकालिकेति विशेषणं व्यर्थमनेकवृत्तीत्यनेनैव गतार्थत्वात् गो
त्रं चेति शास्त्रीयम् औपगवी भार्येति पुंवत्त्वनिषेधो न प्राप्नोतीति न चाऽत्राऽपि शास्त्रीयं गोत्रं वर्त्तत इति वाच्यम् एतद्भाष्यप्रामाण्याद्विशेष्यतस-
र्शोवदद्रव्यपरिमाणेमित्यत्र परिमाणपदं व्यर्थं व्यावर्त्याऽलाभात् लक्षणया गोत्रस्य विवक्षितत्वात् परे त्विति॥ प्रथमपक्षे उपदेशान्तर्गतत्वेनाक

सं·भ· त्याश्रयान्यत्तरोपदेशव्यंग्यायद्वापक्षेआकृतिग्रहणाउपदेशव्यंग्याचेत्यर्थः अत्रेदंतत्त्वम् औपगवीभार्येनदोषः युवप्रत्ययलक्षणेनगोत्र
१३५ त्वेन प्रत्ययाप्रत्ययसाधारणत्वात् किंचाऽणिजातित्वंपूर्वकत्वेदानींप्रत्ययलक्षणेनजातित्वाभावात् तस्यापिसाधारणत्वात् किंचनाव
न्मात्रेजातित्वेपितत्तः परस्त्रीप्रत्ययाऽभावेनजातित्वाऽभावः॥ किंचास्त्विधित्वेन॥ पूर्वभाष्येलग्नेलौकिकगोत्राऽश्रयणमनुचितम् नापि
ब्राह्मणोनारदइत्यसिद्धिः तत्रजातिपदेनाऽऽकृतिइति लक्षणकस्यघटत्वेत्यादिलौकिकस्यवाग्रहणात् अतएवब्राह्मणोएवणइतिसिद्धि
रन्यथातत्रगोत्रत्वेनजातित्वाद्दोषःस्यात् एवंचावंतिरितिभाष्यमप्यनुकूलमितितत्त्वविदः अत्रेदंबोध्यम् तटत्रिषितिकोशस्यप्रामादि
कत्वमनुचितम् किंचकस्यलिङ्गस्यत्यागइतिविनिगमनाऽभावः जातेराविष्टलिङ्गस्वभावस्याऽपि आविष्टप्राप्तम् स्वतएवनाऽन्यतोलि-
ङ्गं यस्येतिविग्रहेणस्वनिष्ठलिङ्गत्वेपिनदोषः शुक्लादेराश्रयव्यक्तिगतत्वान्नाविष्टलिंगत्वम् असर्वलिंगामित्यस्यापिसर्वेषांयानिस्वतोऽन्य
स्यचेतितदभाववान् किंतुस्वाश्रयमात्रलिंगवर्त्तीत्यर्थेनाऽविरोधः एतयोरिति द्वित्वनिर्देशोऽपिकुमारशब्दविषयइतिनदोषः कुमारश
ब्देहिआकृतीतिलिंगानांचेतिद्वयमेवेतिनदोषः एवंचगोत्रंचेत्यस्यसाहचर्येणसंज्ञात्वमेवअप्रतिदेशमानाऽभावात् स्पष्टेवेति महा रामः
शुद्रीतिभाष्यमेकदेश्युक्तिः॥ वहूनामजादिपाठाद्ब्राह्मणीकुटीत्यादयोगौरादिषुबोध्याः॥३६॥ उपमानशब्देनसादृश्यप्रतीतेस्तस्मात्स्वार्थेष्य १३५

